# काव्यकौस्तुभः

श्रीमद् वलदेव-विद्याभूषण-विरचित

श्रीहरिदासदासः

श्रीश्रीगौड़ीय-गौरव-ग्रन्थगुच्छः ।

# काव्यकौस्तुभः

श्रीश्रीमद् वलदेवविद्याभुषण-विरचितः



श्रीहरिदासदासेन प्रकाशितः ।

[ श्रीनवद्वीप हरिवोल-कुटीरतः ]

प्रथमं संस्करणं

४५८ श्रीचैतन्याब्दः ।



भैक्ष्यं—१)

# अवतरणिका ।

## गौड़ीय-वैष्णव साहित्येष्वलंकार-शास्त्रम् ।

अलंकारशास्त्रं खलु काव्यमीमांसेति कैरपि महाजनै रभिधीयते, तेनैव चास्य स्वरूप-परिचयोऽपि व्यक्तीस्यात् । शास्त्रेऽस्मिन् लब्धव्युत्पन्नस्य खलु काव्य-रचनायां तथा काव्य-स्थित दोषगुण-रीत्यलंकारादीनां सम्यगवधारण-शक्ति र्जायते । वैद्यके निदानस्यावश्यकतावद् भाषायां व्याकरणस्य प्रयोजनीयतावत् काव्येऽपि अलंकार-शास्त्रस्य सविशेषोपयोगितापेक्षे परिलक्षिते । शास्त्रेऽस्मिन् दोष-गुण-रीति-रसादीनामपि समावेशेऽपि कथंकार मलंकार-शास्त्रेति व्यपदेशोऽस्येति विवेचनीयं । भामहोद्भट-रुद्रट-वामनादिभिः खलु प्राचीनैरालंकारिकै गुणालंकारयोः प्रायः साम्यं स्वीकृत्य "अलंकारा एव काव्ये प्रधानमिति" सिद्धान्तितम् । * अतएवालंकार-प्रधानत्वात् शास्त्रमपि अलंकार-पदवीं भेजे । एषा श्रेणी खलु "अलंकार-प्रस्थान"मिति यथार्थ-मुच्येत ।

श्रीमद्दण्डिना काव्यादर्शेऽलङ्कार-प्राधान्ये सुस्थापितेऽपि 'गुणा एव काव्यप्राणा' इति कृत्वा गौडीय-वैदर्भीरीत्योर्भेदो निरूपितः । "श्लेषः प्रसादः समते" त्यादि दश गुणाः किल वैदर्भीमार्गस्य

---

* रुय्यक-कृतेऽलंकार-सर्वस्वे—"उद्भटादिभिस्तु गुणालकाराणां प्रायशः साम्यमेव सूचितं, विषयमात्रेण भेदप्रतिपादनाम् । + + + तदेवमलंकारा एव काव्ये प्रधानमिति प्राच्यानां मतम् ।"

प्राणाः, एतद्वैपरीत्यं खलु गौड़ीयरीत्यां समाद्रियते। वामनोऽपि काव्यालंकार-सूत्रवृत्त्यां गुणं काव्यशोभाविधायकमलङ्कारं च गुणकृत-काव्यशोभाया उत्कर्ष-संपादकमित्युक्त्वा गुणानामेव प्राधान्यं स्वीकृतवान्। रीतिरेव काव्यात्मेति मतमेतेषाम्। वैदर्भी-पांचाली-गौड़ीया-रीतीनां वैदर्भी खलु सर्वोच्चतां भजते। एतेऽपि ध्वन्यमानमर्थमेव वाच्योपस्कारकत्वेनालंकार-पक्ष एव निःक्षिप्तवंतः; अतस्तदानीमपि शास्त्रस्यास्यालंकारत्व-व्यपदेश एवासीत्। एषा किल '<u>रीति-प्रस्थान</u>' मित्यभिधीयते।

भामहोद्भटौ अलंकाराणामेव सर्वथा प्राधान्यं स्वीकृत्य तदतिरिक्त-धर्मान्तरस्यास्तित्वं न मन्येते स्म; विशेषे धर्मे परि-व्यक्तेऽपि कस्मिंश्चित् सोऽप्यलंकार-पर्याय एवान्तर्भुक्तः स्यात्। * भरत-नाट्यशास्त्रे चालंकाराणां दोषगुणयोर्विवृतिर्दत्तास्ति। वामनाचार्य्यस्तु शब्दगुणार्थगुणयोः पार्थक्यम् परिस्फुटितवान्। भोजराजस्य सरस्वती-कण्ठाभरणे गुण-दोषाणां विस्तृतविवरण-विभाग-निरूपणादिकं सुविद्यते। रुद्रटस्य काव्यालङ्कारे गुणा-लङ्कारदोष-रीतीनामासनं समानमेव। लाटीया रीतिमंगीकृत्य स खलु पूर्वोक्त-रीतीनां चातुर्विध्यं प्रतिपादितवान्। लघु-समासनिबद्धा रचना हि पाञ्चाली, मध्यसमासबहुला—लाटीया; अतिविस्तृत-समास-भूयिष्टा खलु गौड़ीया, समास-रहिता च

---

* "तत्र काव्यालंकारा वक्रोक्ति-वास्तवादयः अस्य प्राधान्येनाभि-धेयाः। अभिधेय-व्यपदेशेन हि शास्त्रं व्यपदिशन्ति स्म पूर्वकवयः, यथा कुमारसम्भवः काव्यमिति। दोषा रसाश्चेह प्रासंगिका न तु प्रधानाः।" नमिसाधुः।

रचना वैदर्भी। शब्दालङ्कारार्थालङ्कारयो र्भेदमपि स श्रीमान् दर्शितवान्। रुद्रटस्य ग्रन्थे खलु रसावतारणा दृश्यते। तत्र-भवान् शृङ्गार-वीर-करुण-वीभत्स-भयानकाद्भुत-हास्य-रौद्र-शान्त-प्रेयांस इति दश रसानुल्लिखितवान्। शृङ्गार-रसस्येह सम्भोग-विप्रलम्भ-भेदौ, नायक-नायिका भेदाश्च दर्शिताः। विप्र-लम्भे प्रथमानुराग-मान-प्रवास-करुणाश्चावान्तरभेदाः स्वीकृताः। वस्तुतः प्राचीनालङ्कारिकाणां तत्रभवानेव रस-प्राधान्यं महिमानं च संघोषितवान्। अग्निपुराणस्य ३३७ अध्यायतः ३४० अध्याय-पर्य्यन्त मलंकार-प्रकरणं दृश्यते। पुराणमते किल नीरसं वाक्यं काव्याय न कल्पते।† चिन्मयब्रह्मणः स्वाभा-विकानन्दाभिव्यक्तौ चमत्कार-रसो भवेत्। रसस्याद्यवि-कारः खलु अहंकारः, तस्मादभिमान स्तस्माद्रतिरुद्रेकः। रति-रेषा व्यभिचारिणानुभावादिभिश्च परिपुष्टा सती शृङ्गार-रसाय संपद्येत ( अग्नि० ३३८।१—४ )। रागात् शृङ्गारः, तैक्ष्ण्याद् रौद्रः, अवष्टंभाद् वीरः, संकोचाच्च वीभत्सो रसो जायेत। अपि च शृङ्गारात् हास्यं, रौद्रात् करुणः, वीराददद्भुतः, वीभत्साच्च भयानकरसोऽपि संजायते ( ३३८।५--८ )। काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते। अलङ्करणमर्थानामर्थालङ्कार इष्यते। तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम्। अर्थालङ्कार-रहिता विधवेव सरस्वती ( ३४३।१—२ )। पुराणेस्मिन् शब्दा-

---

† लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ( अग्नि ३३६-६ ); न भावहीनोऽस्ति रसो न भावो रस-वर्जितः ( ३३६।१२ )।

र्थोभयलङ्कारभेदेनालंकार-त्रैविध्यं स्वीकृतम्। * रुद्रटोऽग्नि-पुराणञ्च रस-प्राधान्यं स्वीकृत्यापि रसस्य गुणालंकाराभ्यां पृथक्-त्वमुपकार्य्यत्वं च नो पर्यस्फोटयत्। रसस्य गुणान्तरत्वमेतयो र्मतम्। अग्निपुराणे किल ध्वनि रुभयालङ्कारावान्तरभेदरूपेण गणितः। सरस्वतीकण्ठाभरणे तु 'ध्वनिमत्ता तु गांभीर्यमिति' कृत्वा गांभीर्यनामाभिनव-गुणः स्वीकृतः। एषा श्रेणी हि '<u>रस-प्रस्थान</u>'मिति कथ्येत। एते परवर्त्तिनः आलंकारिका रसस्यात्मस्थानीयत्वं संसूचितवन्तः, तथापि पूर्वप्रचलितालंकार-शास्त्रव्यपदेशोऽस्य सुस्थिरोऽभूत्।

आनन्दवर्धनाचार्यास्तु 'ध्वन्यालोके' काव्यस्यात्मा स एवार्थः (१।५) इति ध्वनिरेव काव्यात्मतां निरूपितवन्तः। एतेषां मते खलु ध्वने व्यंङ्ग्यार्थस्य वा प्रतिपादनयैव काव्य-चमत्कारिता सौन्दर्यं च सुसंपत्स्येत। व्यंजनारूप-व्यापारान्तरेण वस्तुनो ऽलंकारस्य रसभावादे र्वा वस्तु-प्रतीत्यां काव्यस्योत्तमत्वं संजा-येत। पुनश्च ध्वने र्ध्वन्यन्तरोद्गारे काव्यस्योत्तमोत्तमता जायेतेति पश्चाद् व्यक्तीभावि। श्रीविश्वनाथः कविराजस्तु साहित्यदर्पणे रसात्मक-वाक्यस्यैव काव्यतां निर्द्धारितवान्। व्यंजनावृत्तिविरोधिनां बहुमतवादान् खंडयित्वा आनन्दवर्धनाः खलु ध्वनिवादं स्थापितवन्तः। अभिनवगुप्तोऽपि 'लोचन' नामिकायां ध्वन्यालोकटीकायामर्वाचीनविपक्षाणां मतानि

---

* शब्दार्थयोरलंकारो द्वावलंकुरुते समम्। एकत्र निहितो हारः स्तनं ग्रीवामिव स्त्रियः॥ (३४५।१)

निरस्य ध्वनिवादं पुनपरि प्रतिष्ठापितवान्। उत्तरकाले मम्मटभट्टा अपि 'काव्यप्रकाशे' व्यंजनावृत्तेः सर्वातिशायि-महामहिमानं कीर्त्तितवन्तः। काव्यप्रकाशस्य रीतिमुरीकृत्य विश्वनाथः साहित्यदर्पणं विरचितवान्। ततो जगन्नाथो 'रस-गंगाधर'-नामके ग्रन्थरत्ने पूर्वाचार्यपादैः कृतमस्पष्ट-संन्दिग्ध-प्रमेयसमूहं सुस्पष्टं निःसंशयितं च प्रतिष्ठापितवान्। अलंकाराणां श्रेणीविभागं तथावान्तरभेदांश्च विचार्य रुय्यकः 'अलंकार-सर्वस्वं' प्रणिनाय। साहित्यदर्पण-रसगंगाधरैकावली-चित्रमीमांसादिषु ग्रंथेषु रुय्यकमतमेव सुसंगृहीतम्। रसस्य काव्यात्मत्व-वादिनां मतं समादरं नो लेभे ; परन्तु काव्यात्मता-वादिनोऽपि रसस्य व्यंजनाव्यापाराविर्भूतत्वं वदन्तः खलु नवीना-लंकारिकैः परमसम्मानिताः दृश्यन्ते। ध्वनिमते हि प्राचीना-र्वाचीनालंकारिकाणां सकलमेव वस्तु यथायथं समावेशितं, तेषां परस्परं संबन्धमसन्दिग्धता च वरीवर्त्ति, अतएवास्य बहुशः समर्थनं समजायत। रसो वै काव्यस्यात्मा, शब्दार्थौ तस्य शरीरं, गुणा रसधर्मा एव। प्राचीनालंकारिकाणां मते य एव काव्य-प्राणत्वेन निरूपितः सोऽलंकारः काव्यशरीरभूत-शब्दार्थयोः शोभासंपादकत्वेन काव्यात्मभूतरसाभिव्यक्ति-कारणमिति" "ध्वनिप्रस्थान" नामिकायाः चतुर्थश्रेण्याः सिद्धान्तः। मतेऽस्मिन् शब्दार्थयो रविच्छेद्य-संबन्धो निरूपितः, शब्दगतोर्थगतो वा गुणः, दोषोऽलंकारश्च उभयो धर्मत्वेन परिगणितः, काव्यात्म-भूतरसध्वनयोरभिव्यक्तौ प्रत्येकस्यैवोपयोगितास्ते। ईदृशो सर्वमुखतैव ध्वनिप्रस्थानं सर्वसहृदय-समादरणीयमकरोत्।

प्रबन्धविस्तारभिया नान्यग्रन्थकाराणां ग्रन्थानां वा नामोल्लेखः कृतः ।*

प्रसंगतः ऋग्वेदमवलंब्यात्रालंकार-निरूपणं क्रियतेऽति-संक्षेपेण ; उपमालंकाराणां वैदिक-पर्याय-निरूपण-प्रसंगे यास्कस्य निघण्टौ ( ३।१३ ) :—

इदमिव ( १ ) इदं यथा ( २ ) अग्निर्न ये ( ३ ) चतुरश्चिद्-दमानात् ( ४ ) ब्राह्मणा व्रतचारिणः ( ५ ) वृक्षस्य नु ते पुरुहूतवयाः ( ६ ) जार आ भगम् ( ७ ) मेषोभूतोऽभी यन्नयः ( ८ ) तद्रूपः ( ९ ) तद्वर्णः (१०) तद्वत् (११) तथा (१२)। इति द्वादशोपमाः ( Jibananda Edition p. 270 )

अस्य विवृति र्यथा नैघण्टुककांडे ( Ibid p. 446 ) :—

अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति उपमार्थेऽपि × × × । उपमा नाम—कस्मिंश्चिदेवार्थे यः प्रसिद्धो गुणः, तदन्यस्मिन्न-प्रसिद्ध स्तद्गुणेऽर्थे शब्दमात्रेण यदुपसंयोज्य तद्गुण-प्रकाशनं क्रियते—सोपमा । 'दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टात् उपचार स्तस्य येनोपमिमीते ; ( ५।७।१९ ) मंत्रेऽस्मिन् न-शब्दोऽयं उपमार्थे व्यवहृतः । लौकिके संस्कृते 'न' शब्दो निषेधार्थे प्रयुज्यते, वेदे तु निषेधोपमाद्योतकोऽयमिति मन्तव्यम् । ववाशब्दावपि उपमावाचकौ । लौकिके तु केवलमुप-मार्थे तौ प्रयुज्येते यथा—

---

* शब्दकोषच्छायावलम्बनेन लिखितमेतत् । विशेषजिज्ञासायां Prof. S. K. De. M. A,, D-Litt., कृतं 'History of Sanskrit Poetics' नामक ग्रन्थरत्नं द्रष्टव्यम् ।

( १ ) जातां मन्ये तुहिनमथितां पद्मिनीं वान्यरूपाम् ( मेघदूतं ८३ )

( २ ) मणीवोष्ट्रस्य लंबेते ( सिद्धान्तकौमुदी )

( ३ ) हृष्टो गर्जति चातिदर्पितबलो दुर्योधनो वा शिखी ( मृच्छ ५।६ )

पुनरुपमा-लक्षणनिर्णये—( Ibid p 676 )

सामान्यलक्षणमासां ब्रवीति—'यदतत्तत्सदृशमिति गार्ग्यः।' यत् किञ्चिदर्थजातमतद् भवति, तत् सरूपं च, यथा अनग्निः खद्योतः अग्निसरूपश्च सोऽग्निनोपमीयते—अग्निरिव खद्योत इति। एवमतत्सरूपेण गुणेन गुण-सामान्यादुपमीयते—इत्येवं गार्ग्यः आचार्यो मन्यते। 'तदासां कर्म' स आसामुपमानानामर्थः यदप्रसिद्धतरगुणस्य कस्यचित् प्रसिद्धतर-गुणेनान्येन गुण-प्रकाशनमित्यादि। + + + ज्यायसा वा गुणेन, प्रख्याततमेन वा कनीयांसं वा प्रख्यातः वोपमिमीते। तद् यथा—सिंहो मानवकः चन्द्र इव कान्तो मानवकः इत्यादि।

( १ ) 'तनूत्यजेव तस्करा वनर्गू' ( ७।५।३२।६ ), सक्तुमिव तितउना ( ८।२३।२२ ); अत्र इव-शब्द उपमा-द्योतकः।

( २ ) यथा इति—एषा कर्मोपमा, 'यथा वातो यथा वनं यथा समुद्र एजति' ( ४।४।२०।४ ), अत्र यथा = इव।

( ३ ) 'अग्नि नं ये भ्राजसा (८।३।१२।२), अत्र न = इव।

( ४ ) 'चतुरश्चिद्दमानात्', अत्र चित् = इव।

( ५ ) 'ब्राह्मणा व्रतचारिणः' ( ५।७।३।१ ), अत्र ब्राह्मण इव व्रतचारिणः इति लुप्तोपमा।

( ६ ) 'वृत्तस्य नु ते' ( ४।६।१७।२ ) अत्रोपमार्थे नु।

( ७ ) 'जार आ भगम्' ( ७।६।१०।१ ) आ=इव।

( ८ ) 'मेषोभूतो भि यन्नयः' ( ५।७।२४।५ ) अत्र मेष इत्येषा भूतशब्देनोपमा।

( ९, १० ) अग्निरिति—एषा रूपोपमा; 'हिरण्यवर्णः' ( २।७।२३।५ )

( ११ ) वदिति—एषा सिद्धोपमा; ब्राह्मणवदधीते, वृषलवच्चाक्रोशति।

( १२ ) 'था' इत्यय' चोपमाशब्दः, तं प्रत्नथा पूर्वथा विश्वथेमथा ( ४।२।२३।१ )

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते—सिंहो व्याघ्रो इति पूजायां, श्वा काक इति कुत्सायां, काक इति शब्दानुकृति स्तदिदं शकुनिषु बहुलं न शब्दानुकृति र्विद्यत इत्यौपमन्यवः ( Ibid p 695 )।

उदाहृते मन्त्रसमूहे उपमानां चातुर्विध्यं स्वीकृतमस्ति—

( १ ) कर्मोपमा ( २ ) रूपोपमा ( ३ ) सिद्धोपमा ( ४ ) लुप्तोपमा च।

यास्केन उपमान-शब्दोऽपि व्यवहृतः। 'यावन्मात्रमुषसो न प्रतीकम्' इति ( ८।४।१२।३ ) मन्त्रव्याख्यायां + + + वास्त्युपमानस्य संप्रत्यर्थे प्रयोगः।

पाणिनिः व्याकरणे उपमानोपमितिसामान्यप्रभृति-शब्दानामपि प्रयोगं कृतवान्—

( १ ) उपमान—उपमानानि सामान्यवचनैः ( २।१।५५ ), उपमानादप्राणिषु ( ५।४।८७ ), उपमानाच्च ( ५।४।१३७ ) इत्यादि ।

( २ ) उपमितं—उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ( २।१।५६ )

( ३ ) सामान्यं—( २।१।५५, ५६ )

कात्यायनकृत-वार्त्तिके ( १।३।२१, २।१।५५ ) इत्यादौ महाभाष्ये ( २।१।५५ ) चोपमानस्य लक्षणमास्ते निरूपितम् ।

सांप्रतं ध्वनिप्रस्थानस्यैवानुवर्तिनि प्रधानतो गौड़ीय-वैष्णव-शास्त्रनिवहे निबद्धां प्रणालीमवलंब्यालङ्काराणां दिग्दर्शनं क्रियते । बाल-प्रलपितमेतत् क्षम्यतां तत्रभवद्भिः सुधीभिः । १४६३ शाके श्रीश्रीरूपगोस्वामिपादैः हरिभक्तिरसामृतसिन्धुः प्रणीतः, १४७१ शाके ततःपरं चोज्ज्वलनीलमणि र्निर्मितश्च । उज्ज्वलः खलु रसामृत-परिशिष्ट एव, ग्रन्थकारा अपि स्वयमुक्तवन्तः ( पश्चिम—५।२ ) ।

निवृत्तानुपयोगित्वाद् दुरूहत्वादयं रसः ।
रहस्यत्वाच्च संक्षिप्य विततांगोऽपि लिख्यते ।

किन्तु उज्ज्वले शृङ्गाररस एव सुविस्तृतं वर्णितः ( उज्ज्वल नायक—२ ) । उज्ज्वल ग्रन्थोऽयं श्रीसिंहभूपालकृत-'रसार्णव-सुधाकर' नाम ग्रन्थरत्नस्य छायामवलंब्यैव लिखितः । रसामृते उज्ज्वले च भक्तिरसानामेव सम्यगालोचना दरीदृश्यते । तत्र भवन्तः गोस्वामिपादाः खलु भक्तिमेव मुख्याभिधेयतया स्वीकृतय

भक्तिरसस्याभिनव-व्याख्यानं दत्तवन्तः। तथाहि रसामृते— भक्तिरसलक्षणं यथा—

विभावैरनुभावैश्च सात्त्विकै र्व्यभिचारिभिः।
स्वाद्यत्वं हृदि भक्तानानानीता श्रवणादिभिः।
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत्॥ (२।१।५-६)

भक्तिरसास्वादनं हि भाग्यवतामेव जायते, नान्येषामिति ज्ञातव्यं। अधिकारि-निर्णयोऽपि श्रीपादै र्लिखितः—

प्राक्तन्याधुनिकी चास्ति यस्य सद्भक्तिवासना।
एष भक्तिरसास्वाद स्तस्यैव हृदि जायते॥ ७॥

रसस्य ब्रह्मवद्वाङ्मनसोऽगोचरत्वेऽपि भाग्यवन्तो द्रष्टारः श्रोतारश्च रसास्वादनं कुर्युः॥ * दृश्यकाव्येषु द्रष्टारः श्रव्य-काव्येषु श्रोतार एव सामाजिकाख्यां भजन्ते। दृश्यकाव्यस्या-नुकार्याभिनेतृ-दर्शकानां दर्शकस्य तथा श्रव्यकाव्यस्य वर्णनीय-नायकादि-पाठक-श्रोतृणां श्रोतुरेव रसास्वादो जायेतेति बहूना-मालंकारिकाणां सम्मतं। "तस्मादलौकिकः सत्यं वेद्यः सहृदयै-रयम्" इति साहित्यदर्पणे ( ३ )।

रसलक्षणं यथा भक्तिरसामृते—( २।५।११४ )

व्यतीत्य भावनावर्त्म यश्चमत्कृतिभारभूः।
हृदि सत्त्वोज्ज्वले वाढं स्वदते स रसो मतः॥

---

* Though 'Rasa' is something mystical, metaphysical and transcendental, yet it can be realised by the excepted few that have a sympathetic heart to receive it as an audiance ( observer or hearer ).

नाट्यशास्त्रे भरतमुनिभिरपि—

विभावानुभाव-व्यभिचारि-संयोगाद् रसनिष्पत्तिः।

विभावै रनुभावैश्च सात्त्विकै र्व्यभिचारिभिः।

स्वाद्यत्वं नीयमानासौ स्थायी भावो रसो मतः॥

अलंकार-कौस्तुभेपि ( ५ )

वहिरन्तःकरणयो र्व्यापारान्तर-बोधकम्।

स्वकारणादि-संश्लेषि चमत्कारि सुखं रसः॥

अत्र कारणादि-पदेन रसस्य निमित्तकारणं विभावः, समवायि स्थायिभावः, असमवायि संचारो भावः रसनियतकार्यमनुभाव-सात्त्विकादि च बोध्यते। एष निष्कर्षः—सामाजिक-चित्तस्थस्थायिभावो हि काव्यगत-विभावानुभाव-सात्त्विक-व्यभिचारिभि र्मिलित्वा रसाय संपद्येत।

रसशास्त्रं हि ( १ ) साधारणं प्राकृतं वा ( २ ) अप्राकृतमिति च द्विधा भिद्यते। भक्तिवादिनां सम्मतौ प्राकृत नायकादिनां रसास्वादो नैव जायेत, अपि तु श्रीरामसीतादिवद् दिव्यनायक-नायिकानामिव रसास्वादो भवेत्। अतो भगवद् विषयक-काव्यशास्त्रविनोदनं विना सामाजिकस्य रसास्वादो न सम्भवेत्। अनुकार्यस्य रसास्वादनेऽसिद्धे सामाजिकस्यापि तन्नेति ज्ञातव्यम्। प्राकृतानुकार्यादीनां रसानुभवेऽसिद्धे लौकिक-काव्यनाट्यालोचनया सामाजिकस्यापि तन्नेति मन्तव्यम्। साधारण-रसविदां मते पारिमित्याल्लौकिकत्वात् सांतरायत्वाच्च [ साहित्यदर्पणे ३ ] अनुकार्यस्य रसास्वादनेऽसिद्धेऽपि महाकवीनां लेखनी-नैपुण्येन काव्यनाट्यादावपि एवम्बिधो रसो

सञ्चरेद् यथा सत्सामाजिकस्यापि रसास्वादो संपद्येत। तथाहि—भक्तिरसायने श्रीमधुसूदन-सरस्वतीपादाः—

अतस्तदाविर्भावित्वं मनसि प्रतिपद्यते।
किंचिन्न्यूनाच्च रसतां याति जाड्य-विमिश्रणात्॥ (१।१३)

टीका च—विषयावच्छिन्नचैतन्यमेव द्रवावस्थमनोवृत्त्यारूढतयाऽऽविर्भावित्वं प्राप्य रसतां प्राप्नोतीति न लौकिकरसस्यापि परमानन्द-रूपतानुपपत्तिः, अतएवानवच्छिन्नचिदानन्दघनस्य भगवतः स्फुरणाद् भक्तिरसेऽत्यन्ताधिक्यमानन्दस्य, लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात्तत्रानन्दस्य न्यूनतैव, तस्माद् भक्तिरस एव लौकिकरसानुपेक्ष्य सेव्य इत्यर्थः।

भक्तिरसामृते रसलक्षणे सत्त्वोज्ज्वले हृदीति यदुक्तं तत्रत्य-सत्त्वशब्दस्य विवृतिस्तु साहित्यदर्पणाद् ज्ञातव्या—रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते। वाह्यमेय-विमुखतापादकः कश्चनान्तरो धर्मः सत्त्वमिति च। पूर्वमेवोक्तं यत् काव्य-नाट्ययोः श्रवण-दर्शनकारिणां सर्वेषां रसास्वादो न, स तु भाग्यवतां सहृदयानामेव सामाजिकानामिति। साधारण-रस-ग्रन्थे एतत् सत्त्वमेव सामाजिकस्य स्थायिभावतयोच्यते। तदृते सामाजिकस्य रसास्वादो न संघटेत। सत्त्वोद्रेकहेतुरपि साहित्यदर्पणे निरूपितोऽस्ति—"अत्र च हेतु स्तथाविधा-लौकिक-काव्यार्थ-परिशीलनम्।" अर्थात्—अलौकिक-काव्यार्थस्य विभावादेः सम्यगनुशीलनेनैव अत्यन्ताभिनिवेशे जायमाने सत्त्वोद्रेकः स्यात्। अतः साधूक्तं—सामाजिक

चित्तगतस्थायिभावो हि काव्यनाट्यस्थितविभावादिभि र्मिलित्वा रसाय कल्पतेति ।*

भावः । रस-भावयोः प्रायशः साम्येऽपि किञ्चित्तारतम्य-मुभयो र्विद्यते, तथाहि रसामृते ( २।५।११५ )—

भावनायाः पदं यस्तु बुधेनानन्यबुद्धिना ।
भाव्यते गाढसंस्कारै श्चित्ते भावः स कथ्यते ॥

भरतेनापि—देहात्मकं भवेत् सत्त्वं सत्त्वाद् भावाः समुत्थिताः । रसानुभवोपयोगि-जन्मान्तरीण-संस्कारादिकं सूक्ष्मभावेन शिशुतायां स्थितमपि तद्विकाशाय सामाजिकस्य ( अनुकार्यस्यापि ) वयःसंधि-प्रभृतिकं वयोवस्थाविशेषमपेक्षते । भानुदत्तोऽपि 'रसतरंगिणी' नामके ग्रन्थे प्राह—चित्तस्य रसानुकूलो विकारोऽवस्थाविशेषो वा भावः । विकारोऽयं द्विविधः (१) आन्तरः (२) शारीरश्च । स्थायी संचारी च भावः आन्तरः, तथानुभावः ( उद्भास्वर-नृत्यगीतादिकं ) सात्त्विक-भावश्च शारीरो विकारः । स्थायिभावो हि मुख्यतया पञ्चविधो गौणतश्च सप्त एव । सञ्चारिण स्त्रयस्त्रिंशत् सात्त्विका अष्ट । सामाजिकस्य ( अनुकार्यस्यापि ) चित्ते स्थायिभावस्य परिपुष्ट-तानुयायि खलु अनुभाव-सञ्चारिभावयो स्तरंगप्राबल्यस्यापि न्यूनाधिक्यं जायते ।

---

* শ্রীচৈতন্যচরিতামৃতে—( মধ্য ২৩।৪৪ )

বিভাব, অনুভাব, সাত্ত্বিক, ব্যভিচারী ।
স্থায়ী ভাব রস হয়—এই চারি মিলি ॥

स्थायी भाव:—अलंकार-कौस्तुभे (५)

आस्वादांकुर-कन्दोऽस्ति धर्मः कश्चन चेतसः।
रजस्तमोभ्यां हीनस्य शुद्धसत्त्वतया सतः॥
स स्थायी कथ्यते विज्ञै र्विभावस्य पृथक्तया।
पृथग्विधत्वं यात्येष सामाजिकतया सताम्॥

पूर्वोक्ता द्वादश भावा अनुकूलोपकरणैः रसाय कल्पेत तथा सुस्थिरमनवच्छिन्नं चाशेषं तत्तद्रसे विद्येतेति ते स्थायिभावत्वं प्रतिपद्यते। द्वादशैतान्ऋते नान्यः कोऽपि भावः स्थायित्वं भजेत। पुनरेतेषामन्यान्यं सञ्चारित्वमपि कदाचित् सम्भवेन्नाम यथा मधुरे हासादिकं; 'रत्यादयोऽप्यनियते रसे स्यु र्व्यभिचारिणः' ( साहित्यदर्पणे ३ ) प्रबलमभिव्यक्तः सञ्चारी, सामान्यतया व्यक्तः स्थायी तथा देवादिविषया रतिश्चापाततो भाव इति कथ्यते।*

सञ्चारिणः प्रधानानि देवादि-विषया रतिः।
उद्‌बुद्धमात्रस्थायी च भाव इत्यभिधीयते॥ ( दर्पणे ३ )

टीका च—परमविश्रान्तिस्थानेन रसेन सहैव वर्तमाना अपि राजानुगत-विवाहप्रवृत्तभृत्यवदापाततः प्राधान्येनाभिव्यक्ता व्यभिचारिणः देवगुरुनृपादि-विषया च रतिः उद्‌बुद्धमात्रा

---

* साहित्यकौमुद्यां मूले—

रति र्देवादि-विषया व्यभिचारी तथांजितः। ( ४।१२ )

टीकायाञ्च—किञ्च हासादयः क्वचिद् व्यभिचारिणश्च स्युः; यदुक्तं—

शृङ्गार-वीरयो र्हासो वीरे क्रोध स्तथा मतः।
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः॥ ( ४।१३ )

विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावाः भावशब्दवाच्याः। पुनरपि भावोऽयं रसानुकूलमवस्था-विशेषं प्राप्य स्थायिभावत्वं प्राप्णोति। "रसावस्थः परं भावः स्थायितां प्रतिपद्यते।" रसावस्थः भाव एव स्थायी भावः। अयमेव विभावादिभि र्मिलित्वा रसाय परिणमति। "भावा एवाभिसम्पन्नाः प्रयान्ति रसरूपताम्।" नचेदं सर्वथा सत्यं, यदुक्तं—

न भावहीनोऽस्ति रसो न भावो रस-वर्जितः।
परस्पर-कृता सिद्धिरुभयो रसभावयोः॥

रसभावौ किल मृगमद-तद्गन्धवदविच्छेद्यसम्बधिनौ।

भावोऽपि रसविध एवेति मतमालङ्कारिकाणां।

रसभावौ तदाभासौ भावस्य प्रशमोदयौ।
सन्धिः शवलता चेति सर्वेऽपि रसनाद् रसाः॥

रसधर्मयोगित्वाद् भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः।

भावा विभाव-जनिता श्चित्तवृत्तय ईरिताः। रसामृते।
विभावेनोद्धृतो योऽर्थः × × × स भाव इति
संज्ञितः। नाट्यशास्त्रे।

(१) विभावः—कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।
विभावा अनुभावाश्च कथ्यन्ते व्यभिचारिणः॥
[ काव्यप्रकाशे ४ ]

लौकिके जगति रसकारणं नायक-नायकादिकं काव्ये नाट्ये च वर्णितं सद् विभावतां भजेत् यथा नलदमयन्त्यौ। सामाजिकस्य स्थायिभावं विभावयतीति विभावः। नायक-नायिकादि रालम्बनः कैशोर-वसन्त-मलयपवनादयः उद्दीपनाः। "तत्र ज्ञेया विभावास्तु रत्यास्वादन-हेतवः।" रसामृते २।१।१५। तदुक्तमग्निपुराणे—'विभाव्यते हि रत्यादि र्यत्र येन विभाव्यते। विभावो नाम स द्वेधा ऽलम्बनोद्दीपनात्मकः।' विभाव्यन्ते = आस्वादांकुर-प्रादुर्भाव-योग्याः क्रियन्ते सामाजिक-रत्यादिभावा एभिरिति विभावा उच्यन्ते साहित्यदर्पणे। विषयाश्रयभेदे-नालंवना द्विविधाः।

(२) <u>अनुभावः</u>—

अनुभावास्तु चित्तस्थभावानामवबोधकाः। (रसामृते २।२।१)

अलंकारोद्भास्वर-वाचिकभेदा त्रैविध्यमस्य उज्ज्वलेऽनु-भाव-प्रकरणे द्रष्टव्यम्।

(३) <u>सात्त्विकः</u>—

कृष्ण-संवन्धिभिः साक्षात् किञ्चिद् वा व्यवधानतः।
भावै श्चित्तमिहाक्रान्तं सत्त्वमित्युच्यते बुधैः।
सत्त्वादस्मात् समुत्पन्ना ये भावा स्ते तु सात्त्विकाः।
( रसामृते २।३।१ )

अस्यानुभाव-विशेषत्वे ऽपि शुद्धसत्त्वादाविर्भाववत्तया गो-वलीवर्दन्यायेन सात्त्विकत्व-व्यपदेशः। स्तंभ-कम्पादयोऽ-ष्टविधः।

(४) व्यभिचारी—

विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति ।
वागंगसत्त्वसूच्या ये ज्ञेया स्ते व्यभिचारिणः ॥
संचारयन्ति भावस्य गतिं सञ्चारिणोऽपि ते ॥

( रसामृते २।४ १-२)

यः खलु विशेषेण स्थायिभावं पुष्णाति तथा तत एवोत्थितः सन् तस्मिन्नेव निमज्जति च, स एव व्यभिचारीति कथ्यते। सामाजिकस्य स्थायिणं संचारयति वैचित्रीयुक्तं करोतीति संचारीत्यप्यभिधीयते। निर्वेद-विषाद-ग्लानि प्रभृतय स्त्रयस्त्रिंशत्ते ।

विभावेन यः खलु सामाजिक-चित्ते भावितः स्यात् स एव भाव उच्यते। सामाजिकगतोऽयम्—अपरन्तु येन सामाजिक-चित्ते भावस्योन्मेष आविर्भावश्च भवेत्, सोऽपि भाव एव। ( अनुकार्यं ) मूलनायकनायिकादिगतोऽयम्। इत्थमनुकार्य-सामाजिकयो रुभयो र्गता अनुभाव-सात्त्विक-व्याभिचारिणो भावा विद्यन्ते ।

सामाजिकस्य स्थायिभावेन विभावादे र्मिलन-व्यापारे साहित्यदर्पणे टीकाकारः श्रीरामचन्द्र तर्कवागीशोऽपि (२)

१। काव्यनाट्यश्रवणदर्शनादिभिः सामाजिकस्य चित्ते विभावानुभावयोरुपस्थितिः।

२। आक्षेपेण ( व्यञ्जनया बोधात् ) सामाजिकस्य चित्ते द्राक् सञ्चारि-स्थायिभावयो राविर्भावः।

३। साधारणीकरणाख्य-व्यापारबलेन दमयन्ती नलस्य मम वेति विभावादि-चतुष्टयस्य प्रत्येकेन सामाजिकस्य साधारण्य-प्रत्ययः।

४। ततो व्यञ्जनयानुकार्येण सामाजिकस्य रससमानाकार-प्रत्ययः।

५। स्वादनाख्यव्यापारेण 'अहमेव दमयन्तीविषयको रतिमान् नल एव' इत्याकार-स्वीयरसवासितचित्ते रत्याद्य-भेदात्मकः स्वस्मिन्नायकाभेदात्मको रस-साक्षात्कारश्च सहृदय-सामाजिकस्य भवेत्। रसामृते साहित्य-कौमुद्यां च नाट्य-शास्त्रप्रमाणेन दृढ़ीकृतं साधारण्यम्।

शक्तिरस्ति विभावादेः कापि साधारणीकृतौ।
प्रमाता तदभेदेन स्वं यया प्रतिपद्यते॥

साधारण्यं च स्वपर-संबन्धनियमानिर्णयः। रसामृते (२।५।८४) नाट्यशास्त्रश्लोक-टीकायां श्रीपादश्रीजीवगोस्वामिनः —"मुनिवाक्ये तु भेदांशः स्वयमस्त्येव इत्यभेदांश एव तु विभावादेः शक्तिरिति भावः"। मुनिमते किल नाट्यरसास्वादकः प्रमाता सामाजिको वा दृश्यकाव्यस्य प्रेक्षक एव। न च सर्व एव दर्शकाः सामाजिका भवेयुः, यतः—

य स्तुष्टे तुष्टिमायाति शोके शोकमुपैति च।
क्रुद्धः क्रुद्धे भये भीतः स नाट्ये प्रेक्षकः स्मृतः॥

तथा श्रव्यकाव्येऽपि सहृदयः श्रोता पाठको वा सामाजिको भवेत्—सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।

निर्वासनानान्तु रंगान्तः काष्ठकुड्याश्म-सन्निभाः ॥ धर्मदत्तः । येषां काव्यानुशीलनवशाद् विशदीभूते मनोमुकुरे वर्णनीय-तन्मयीभवनयोग्यता, ते हृदय-संवादभाजः सहृदयाः [ अभिनव-गुप्तः ]। रसज्ञतैव सहृदयत्वमिति [ आनन्दवर्धनाचार्यः ]।

यदि तु विगलितवेद्यान्तरत्वमनुकर्त्तृणामपि दृश्यते, तदा तेषामपि सामाजिकत्वमेव, अनुकरणन्तु संस्कार-वशादेव जीवन्मुक्तानामाहारविहारादिवत्। तेन सामाजिकानामेव रसः [ अलंकार-कौस्तुभः ५ ] संपद्येत।

भक्तिरसोदाहरणं यथालंकार-कौस्तुभे (५)

जय श्रीमद् वृन्दावनमदन नन्दात्मज विभो
प्रियाभीरीवृन्दारिक-निखिलवृन्दारकमणे।
चिदानन्दस्यन्दाधिकपदारविन्दासव नमो
नमस्ते गोविन्दाखिलभुवन-कन्दाय महते ॥

अत्र देव-विषयत्वाच्चेतोरञ्जकता रतिरेव भाव। स एव स्थायी, आलंबनं श्रीकृष्णः, उद्दीपनं तन्महिमादि, अनुभावो-हृदयद्रवादिः, व्याभिचारी निर्वेद-दैन्यादिः परोक्षो भक्तानां सामाजिकानान्तु प्रत्यक्षः।

अथ प्रेमरसस्योदाहरणं—[ कौस्तुभे ५।१२ ]

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः।
त्वं मे तस्यामहमिति च यत्तच्च नो साधु राधे
व्याहारे नौ नहि समुचितो युष्मदस्मत्-प्रयोगः ॥

अत्र चित्तद्रवस्य स्थायी स चोभयनिष्ठः आलम्बनमन्योन्यं। उद्दीपनमन्योन्यगुण-परिमलः। अनुभावो विशेष्यनिर्वचनाभावः। व्यभिचारी मत्यौत्सुक्यादिः। परोक्षः श्रीकृष्णराधयोः। सामाजिकानां प्रत्यक्षः।

सांप्रतं भक्तिरस-निर्णायक-गौडीयवैष्णव-ग्रंथानां स्थूलनिर्देशः क्रियते—

## १। श्रीभक्तिरसामृतसिन्धुः।

श्रीगौड़ीयरससाहित्यकल्पतरोः सर्वोत्कृष्टं गलितं फलमेतत् भक्तिरसविज्ञानशास्त्रम्। अस्मिन् पूर्वदक्षिणपश्चिमोत्तरविभाग-चतुष्टये खलु २३ लहर्यः सुविद्यमाना आसते, तत्रोत्तमा भक्तिस्तावत्—

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम्।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा॥ पूर्व १।८

षड्विधा भक्तिः—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी मता॥ १।११

साधनभक्ति लहर्यां साधनभक्तिः—

कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा।
नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता॥ २।२

वैधीरागानुगाभेदादियमपि द्विधा। (२।११-१३) उत्तम-मध्यम-कनिष्ठाधिकारि-निरूपणं कृत्वाऽस्याः ६४ अंगानिविस्तरेण सप्रमाणं वर्णितानि (२।४२-११०)। तेषु श्रीमूर्त्तिसेवा

श्रीमद्भागवतार्थास्वादः, साधुसंगमः, नामसंकीर्त्तनं तथा श्रीधामे वास एव सर्वोपरि वरीवर्त्ति—

दुरूहाद्भुतवीर्येऽस्मिन् श्रद्धा दूरेऽस्तु पञ्चके ।
यत्र स्वल्पोऽपि संबन्धः सद्धियां भावजन्मने ॥ २।११०

तत्र प्रसंगतः युक्तवैराग्यं ( १२५ ) फल्गुवैराग्यं च निर्णीय एकाङ्गा ( १२८ ) तथानेकाङ्गा च भक्ति निरूपितास्ते ।

रागानुगा-भक्ति-लक्षणं—

विराजन्तीमभिव्यक्तं व्रजवासिजनादिषु ।
रागात्मिकामनुसृता या सा रागानुगोच्यते ॥

रागात्मिका—इष्टे स्वारसिकी रागः परमाविष्टता भवेत् ।
तन्मयी या भवेद् भक्तिः सात्र रागात्मिकोदिता ॥

पूर्व—२।१३२

कामानुगा सम्बन्धानुगा चेति भेदद्वयं ( १४७ ) । अत्राधिकारी तु व्रजवासिजनादि-भावलुब्धजन एव ।

तत्तद्भावादि-माधुर्ये श्रुते धी र्यदपेक्षते ।
नात्र शास्त्रं न युक्तिं च तल्लोभोत्पत्ति-लक्षणम् ॥

रागानुगायाः परिपाटीमाह—

कृष्णं स्मरन् जनञ्चास्य प्रेष्ठं निजसमीहितं ।
तत्तत्कथारतश्चासौ कुर्याद् वासं व्रजे सदा ॥१५०॥
सेवा साधकरूपेण सिद्धरूपेण चात्र हि ।
तद्भाव-लिप्सुना कार्या व्रजलोकानुसारतः ॥ १५१ ॥

भावभक्ति-लहर्यां भावस्तावत्—

शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक् ।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते ॥ ३।१

भावाविर्भाव-कारणं हि—

साधनाभिनिवेशेन कृष्ण-तद्भक्तयो स्तथा ।
प्रसादेनातिधन्यानां भावो द्वेधाभिजायते ॥३।५

तदाविर्भाव-लक्षणानि—

क्षान्तिरव्यर्थकालत्वं विरक्ति र्मानशून्यता ।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः ॥
आसक्ति स्तद्गुणाख्याने प्रीतिस्तद्वसतिस्थले ।
इत्यादयोऽनुभावाः स्यु र्जातभावांकुरे जने ॥ ३।११

प्रेमभक्ति-लहर्यां प्रेमा तावत्—

सम्यङ् मसृणितस्वान्तो ममत्वातिशयाङ्कितः ।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते ॥ ४।१

प्रेमेदं भावोत्थं श्रीहरिप्रसादोत्थं चेति द्विधा भिद्यते ।

प्रेमोदये प्रायिकक्रमोऽयं—

आदौ श्रद्धा ततः साधुसंगोऽथ भजनक्रिया ।
ततोऽनर्थनिवृत्तिः स्यात्ततो निष्ठा रुचि स्ततः ॥
अथासक्ति स्ततो भाव स्ततः प्रेमाभ्युदञ्चति ।
साधकानामयं प्रेम्नः प्रादुर्भावे भवेत् क्रमः ॥ ४।११

साधारणतः प्रेमावधि साधकदेहे परिलक्षितमास्ते, न तु तद्विलासभेदो स्नेहादि रतएव भक्तिरसामृते स्नेहमानादीनां विवृति र्नास्ति ( ४।१३ ) ।

दक्षिण-विभागे ( १ विभाव-लहर्यां )

विषयालम्बनस्य श्रीकृष्णस्य ६४ गुणाः ( १।११—११७ ), अस्य पूर्णतमत्व-पूर्णतरत्व-पूर्णतादयः ( ११८—११९ )। धीरोदात्त-धीरललित-धीरोद्धत-धीरप्रशान्तभेदाच्चास्य चातुर्विध्यं ( १२०-१२७ )। अस्याष्ट सद्गुणाः—शोभाविलासादयः (१२३-१४० )। अस्य सहायाः ( १४१ ), कृष्णभक्तानां पञ्चविधत्वं शान्त-दास-सखा-गुरु-प्रेयसीभेदात् ( १५४ )। उद्दीपन—विभावाः—गुण-चेष्टा-प्रसाधनादिः ( १५४-१८६ )।

( २ ) अनुभाव-लहर्यां—

अनुभावास्तु चित्तस्थभावानामवबोधकाः। ( २।१ ) नृत्य-विलुठित-गीतादयः बहवः।

( ३ ) सात्त्विक-लहर्यां—

स्तम्भ-स्वेद-रोमाञ्चादयोऽष्टविध-सात्विकाः स्निग्ध-दिग्ध-रूक्ष-भेदात्त्रिविधाश्च।

( ४ ) व्यभिचारि-लहर्यां—निर्वेद-विषाद-दैन्यादय स्त्रयस्त्रिंशत्।

( ५ ) स्थायिभाव-लहर्यां—

अविरुद्धान् विरुद्धांश्च भावान् यो वशतां नयन्।
सुराजेव विराजेत स स्थायी भाव उच्यते॥
स्थायी भावोऽत्र स प्रोक्तः श्रीकृष्ण-विषया रतिः॥

मुख्य-गौणतया द्विविधोऽसौ, मुख्याः शान्ति-प्रीति-सख्य-वात्सल्य-प्रियतारूपाः पञ्च। गौणाः सप्त—हास-विस्मयोत्साह-शोक-क्रोध-भय-जुगुप्साभेदेन।

पश्चिमविभागे—(१) शान्त- (२) प्रीत- (३) प्रेयो- (४) वत्सल- (५) मधुरभक्तिरसा विभेद-प्रमाणादिपूर्विका आलोचिताः विद्यन्ते।

उत्तरविभागे—हास्यादयः सप्त गौणभक्तिरसाः, मिथो मित्र-वैरस्थितिः, रसाभासाश्च सुवर्णिताः सन्ति।

ग्रन्थस्यास्य टीकात्रयं विद्यते—(१) श्रीजीवगोस्वामिभिः कृता दुर्गमसङ्गमनी (२) श्रीविश्वनाथ-चक्रवर्त्तिरचिता (३) तथा श्रीमुकुन्द दास गोस्वामिनिर्मिता च।

---

## २। उज्ज्वलनीलमणिः।

अखिलरसामृतमूर्त्ति-श्रीकृष्णस्योज्ज्वलरसविज्ञानशास्त्रमेतत्। अस्मिन् खलु नायकभेदादि-गौणसम्भोगान्ते प्रकरण-द्वाविंशके शृङ्गाररसस्य विस्तृतं विवरणं प्रमाणप्रयोगादि-पूर्वकं लिपिबद्ध-मास्ते।

(१) नायकभेद-प्रकरणे विषयालम्बनस्य श्रीकृष्णस्य मधुररसोचिता गुणावली (५), धीरोदात्तादयो नायकाः, पति रुपपतिश्चेति भेदद्वयं, परकीयारस एव शृङ्गाररसस्य परमोत्कर्षः स्थापितः।* बहुवार्यमानत्व-प्रच्छन्नकामुकत्व-मिथोदुर्लभत्वानि

---

* अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठितः। (१२)

खलु रतेरस्याः पारतन्त्र्ये कारणानीति भरतमुनिमतमुररीकृतं (१५)। 'लघुत्वमत्र यत् प्रोक्तमिति' श्लोकटीकायां श्रीजीव-विश्वनाथयोः स्वकीयापरकीया-विचाराडम्बरो विद्यते। धीरो-दात्तादि-चतुर्विधनायकस्य पत्युपपतीतिभेदद्वयस्य पुनरनुकूल-दक्षिण-शठ-धृष्टादि-विभेदे सति ९६ षण्णवतिविधः खलु नायकः।

(२) सहायभेदे-प्रकरणे— चेट-विट-विदूषक - पीठमर्द-प्रियनर्मभेदात् पञ्चसहायाः—एतेषां विविधा गुणाः। स्वयंदूती चाप्तदूती च दूतीद्वयमस्य—कटाक्ष-वंशीध्वनी स्वयं, तथा वीरा-वृन्दादिकाप्तदूती च।

(३) कृष्णवल्लभा-प्रकरणे—स्वकीया-परकीयाभेदाद् द्वि-विधा प्रेयसी। कन्यका परोढ़ा च नायिका। परोढ़ापि साध-नपरा-देवी-नित्यप्रियाभेदेन त्रिविधा। साधनपरा यौथिक्यो मुनयः उपनिषदश्च। अयौथिक्यः प्राचीना नवीनाश्च नित्यप्रिया राधा-चन्द्रावल्यादयः।

(४) राधा-प्रकरणे—सर्वथाधिका राधा महाभाव-स्वरूपिणी।

सुष्ठु कान्त-स्वरूपेयं सर्वदा वार्षभानवी।
धृतषोड़श-शृङ्गारा द्वादशाभरणाश्रिता॥ ५

श्रीराधायाः पञ्चविंशति गुणाः (८-३६)। सखीनां पाञ्च-विध्यं—सखी-नित्यसखी-प्राणसखी - प्रियसखी - परमप्रेष्ठसखी-भेदात्।

( ५ ) नायिकाभेद-प्रकरणे—मुग्धा-मध्या-प्रगल्भा-भेदात् नायिका-त्रैविध्यं—मध्या प्रगल्भा च धीरा, अधीरा, धीराधीरा चेति त्रिविधा भिद्यते। नायिकानामष्टावस्थाः—अभिसारिका, वासकसज्जा उत्कण्ठिता, खण्डिता, विप्रलब्धा, कलहान्तरिता प्रोषितभर्त्तृका, स्वाधीनभर्त्तृका चेति। आसां पुनरुत्तमा-मध्यमा कनिष्ठाभेदेन त्रैविध्यं वरीवर्त्ति।

( ६ ) यूथेश्वरी-भेदप्रकरणे—प्रथमतोऽधिका समा लघु-श्चेति त्रिविधासौ पुनः प्रखरा-मध्या-मृद्वीरूपेण त्रैविध्यं।

( ७ ) दूती-प्रकरणे—दूती खलु द्वेधा स्वयमाप्तभेदात्। स्वयंदूत्याः स्वाभियोगो वाचिकांगिकचाक्षुषरूपे निष्पन्नः स्यात्। आप्तदूती हि अमितार्था निसृष्टार्था पत्रहारीति त्रिविधा। आसां विशेषक्रियादिकं सुलिखितमास्ते।

( ८ ) सखी-प्रकरणे—प्रखरा-मध्या-मृद्वीसखीनामात्यन्तिकापेक्षिकादि भेदाः। वामा-दक्षिणा—आसां दूत्यं-नित्य-नायिकाः, नितरसख्यः, समस्नेहा असमस्नेहाश्चेति।

( ९ ) हरिवल्लभा-प्रकरणे—व्रजदेवीनां स्वपक्ष-सुहृत्पक्ष-तटस्थ-विपक्षभेदाः विवृताः।

( १० ) उद्दीपन-प्रकरणे—गुण-नाम-चरित्र-मण्डन - तटस्थादयो भावा उद्दीपनाः। वाचिक-कायिक-मानसभेदाद् गुण-त्रैविध्यं, वयःसन्धिः, माधुर्यं, यौवन-विभेदाः, रूप-लावण्य-सौन्दर्यादि-नाम-रासादि-चरितावली।

( ११ ) अनुभाव-प्रकरणे—नायिकानामलङ्कारा भाव-हावादयो विंशतिः। अवान्तरभेदः—उद्भास्वरः—

उद्भासन्ते स्वधाम्नीति प्रोक्ता उद्भास्वरा बुधैः।
नीव्युत्तरीयधम्मिल्ल-स्रंसनं गात्रमोटनं।
जृम्भा घ्राणस्य फुल्लत्वं निश्वासादयस्ते मताः॥

( १२ ) सात्त्विक-प्रकरणे—स्तम्भ-स्वेदादयोऽष्ट सात्त्विकाः।

( १३ ) व्यभिचारि-प्रकरणे—निर्वेद-विषादादयस्त्रयस्त्रिंशत् सञ्चारिणः। भावसन्धि-शाबल्य-शान्ति-प्रभृतीनां विस्तृतालोचना सुविद्यते।

( १४ ) स्थायिभाव-प्रकरणे—शृङ्गाररसेऽस्मिन् मधुरा रतिरेव स्थायिभावः कथ्यते। रत्याविर्भाव-कारणं हि—

अभियोगाद् विषयतः सम्बन्धादभिमानतः।
सा तदीय-विशेषेभ्य उपमातः स्वभावतः।
रतिराविर्भवेदेषामुत्तमत्वं यथोत्तरम्॥

स्वभावो हि द्विविधः—निसर्ग-स्वरूपभेदात्। स्वरूपस्यापि पुनर्द्विभेदो ललनानिष्ठोभयनिष्ठत्वभेदात्। रतिरेषा साधारणी-समञ्जसा-समर्थाभेदेन त्रिविधा। प्रेम ( प्रौढ़प्रेम ), स्नेहः ( घृत-मधुस्नेहौ ) मानः ( उदात्तो ललितश्च ) प्रणयः ( मैत्र-सुमैत्र-सख्य-सुसख्यभेदाः ) रागः ( नीलिम-रक्तिमानौ—प्रत्येकं द्वेधा-नीली-श्यामे, कुसुम्भः मञ्जिष्ठा च। ) अनुरागः, भावः ( रूढ़ः—निमेषासहिष्णुता, आसन्नजनताहृद्विलोड़नं, कल्प-

चणत्वं, चणकल्पत्वं च; अधिरूढ़:—मोदनो मोहनश्च ), दिव्योन्माद:, उद्‌घूर्णा दशविधा:, मादन:—

सर्वभावोद्‌गमोल्लासी मादनोऽयं परात्पर: ।
राजते ह्लादिनीसारो राधायामेव य: सदा ॥ १५५ ।

( १५ ) शृङ्गार-भेदप्रकरणे—विप्रलम्भ: सम्भोगश्च ।

( १६ ) पूर्वराग-प्रकरणे—

रति र्या संगमात् पूर्वं दर्शन-श्रवणादिजा ।
तयो रुन्मीलति प्राज्ञै: पूर्वराग: स उच्यते ॥

अस्य साक्षात्-स्वप्नयो दर्शनादि-विभेदौ—वन्दि-दूती-सखीमुखे श्रवणादय:—प्रौढ़े सति लालसादयो दश दशा: ।

( १७ ) मान-प्रकरणे—सहेतुक-निर्हेतुकमानौ सुनिर्णीतौ ।

( १८ ) प्रेमवैचित्त्य-प्रकरणे—लक्षणोदाहरणे ।

( १९ ) प्रवास-प्रकरणे—बुद्धिपूर्वाऽबुद्धिपूर्वा चेति भेदद्वयं चिन्ता-जागरोद्वेगादिदशानां विस्तृत-विश्लेषणं ।

( २० ) संयोगवियोगस्थिति-प्रकरणे—प्रकटलीलायां मथुरागमनं, नित्यलीलायान्तु वृन्दावने नित्यस्थिति र्वर्णिता ।

( २१ ) सम्भोग-प्रकरणे—जाग्रदवस्थायां मुख्य:, स्वप्ने च गौण: सम्भोग:, मुख्य श्चतुर्विध:—पूर्वरागात् परं संक्षिप्त:, मानात् संकीर्ण:, किञ्चिद्‌दूरप्रवासात् सम्पन्न:, सुदूरप्रवासाच्च समृद्धिमान् । एतेषां विस्तारित-विश्लेषणानि सुविन्यस्तानि ।

( २२ ) गौणसम्भोग-प्रकरणे—स्वप्ने संक्षिप्तादिभेद-चतुष्टयं-सन्दशन-जल्प-स्पर्शनादीनां सम्भोगानां वर्णना ।

संप्रयोग-लीलाविलासयोरन्तिमस्य समादरः—

विदग्धानां मिथो लीलाविलासेन यथासुखं ।
न तथा संप्रयोगेण स्यादेवं रसिका विदुः ॥ २२

समाप्तौ—अतलत्वादपारत्वादाप्तोऽसौ दुर्विगाहतां ।
स्पृष्टः परं तटस्थेन रसाब्धि र्मधुरो मया ॥ २३

अस्य ग्रन्थस्य टीकाद्वयं वर्त्तते—लोचनरोचनी श्रीजीव-गोस्वामिभिः कृता, आनन्दचन्द्रिका च श्रीलविश्वनाथ-चक्रवर्त्तिभिः प्रणीता।

---

## ३। भक्तिरसामृतशेषः।

अथ श्रीमज्जीवगोस्वामिचरणा भक्तानां काव्यरसास्वादनाय भक्तिरसामृतसिन्धोः परिशेषतया तत्रावर्णित-काव्यालङ्कार-गुण-दोष-रीतिप्रभृतिकं साहित्यदर्पणोक्तदिशात्र संक्षेपेण वर्णित-वन्तः। साहित्यदर्पणस्य किल तृतीय-पञ्चम-षष्ठपरिच्छेदा एवात्र प्रकृतानुपयोगित्वात् परित्यक्ताः, अन्यत्र च तत्रत्यप्रक्रिया-मेव यथायथमुररीकृत्य भक्तिपक्षेषु प्रदर्शितान्युदाहरणानि। सप्तप्रकाशात्मकस्यास्य रसामृतशेषस्य प्रथमे काव्यस्वरूपनिरू-पणं, द्वितीये वाक्यस्वरूपादि, तृतीये ध्वनिभेदाः, चतुर्थे शब्दार्था-लङ्काराः, पञ्चमे दोषाः, षष्ठे रीतिप्रभृतिकं, सप्तमे च गुणाः सोदाहरणं सोपपत्तिकं सुविद्यन्ते।

# ४। नाटक-चन्द्रिका।

अथ श्रीमद् रूपगोस्वामिपादाः श्रीविदग्धमाधव-ललित-माधवयो र्नाटकयो र्लक्षणोदाहरणलक्ष्यविषयाणाञ्च समन्वय-साधनाय "नाटकचन्द्रिका" नाम नाट्य-शास्त्रं प्रणिन्युः। भरत-मुने र्नाट्यशास्त्रं तथा शिङ्गभूपालस्य रसार्णव-सुधाकरञ्च विचार्य साहित्यदर्पणं भरतमतविरोधात् परित्यज्य च तत्रभवन्त श्चक्रुरिदं ग्रन्थरत्नम्।

वीक्ष्य भरतमुनिशास्त्रं रसपूर्वसुधाकरञ्च रमणीयं।
लक्षणमतिसंक्षेपाद् विलिख्यते नाटकस्येदम्॥ १॥

नातीवसंगतत्वाद् भरतमुने र्मतविरोधाच्च।
साहित्यदर्पणीयां न गृहीता प्रक्रिया प्रायः॥ २॥

ग्रन्थेऽस्मिन् नाटक-लक्षणं, दिव्य-दिव्यादिव्यादिव्यभेदतो नायक-त्रैविध्यं, ख्यात-कल्प्य-मिश्रेति त्रिविधमितिवृत्तं, प्रस्ताव-नाशीर्वादनमस्क्रियादि वस्तुनिर्देशात्मकनान्दीत्रयं, प्ररोचना, आमुख-पञ्चकं, सन्धिः, बीजादयः पञ्च प्रकृतयः, आरम्भादयः पञ्चावस्थाः। मुखादि सन्ध्यङ्गपञ्चकं, द्वादशबीजभेदाः, त्रयोदश प्रतिमुखसन्धि भेदाः, द्वादश गर्भसन्धिभेदाः, त्रयोदश विमर्श-सन्धिभेदाः, चतुर्दश निर्वहणसन्धिभेदाः, एकविंशतिः सन्ध्यन्त-राणि, षट्त्रिंशत् भूषणभेदाः, चत्वारि पताकास्थानानि विष्कम्भ-कादयोऽर्थोपक्षेपकाः, स्वगतादिनाट्योक्तयः, अङ्कस्वरूपं, गर्भाङ्क-स्वरूपं, अङ्क-संख्या, नाटकस्य रसादि संस्कृतप्राकृतभाषाविधानं,

भारत्यादयो वृत्तिभेदाः, नर्म-तद्भेदाः—सलक्षणोदाहरणा वर्णिताः ।

---

## ५ । अलङ्कार-कौस्तुभः ।

अथ श्रीमान् कविकर्णपूरगोस्वामिपादोऽलङ्कार-कौस्तुभ-नामकेऽस्मिन् शास्त्रे दशकिरणात्मके प्रथमे तावत् 'ध्वनिर्नाद-ब्रह्म" इति निर्णीय परा-पश्यन्तीतरादि योगशास्त्रमतानुसारेण नादस्य सर्वोत्कर्षं प्रतिपादितवान् । ध्वनेः काव्यप्राणत्वं प्रतिपाद्य रसापकर्षकदोषरहितं यथासम्भवगुणालङ्कार-रसात्मक शब्दार्थयुगलं काव्यमिति निश्चिकाय ।

कविलक्षणं हि—"सवीजो हि कविर्ज्ञेयः ;" वीजं नाम प्राक्तन-संस्कार-विशेषः काव्यरोहभूः । काव्यं हि त्रिविधं—

उत्तमं ध्वनिवैशिष्टे मध्यमे तत्र मध्यमं ।
अवरं तत्र निष्पन्द इति त्रिविधमादितः ॥

पुनः ध्वनेर्ध्वन्यन्तरोद्गारे तदेव ह्युत्तमोत्तमं ।
शब्दार्थयोश्च वैचित्र्ये द्वे यातः पूर्वपूर्वताम् ॥

शब्दार्थवृत्तित्रयनिर्णयात्मके द्वितीयकिरणे स्फोटवाद-मुरी-कृत्यान्तरवहिस्फोटौ निर्णीय वर्णात्मकशब्दस्य साध्वसाधु-भेदद्वय-मुल्लिख्य जातिक्रियागुणद्रव्यै स्तस्य पुनश्चातुर्विध्यं प्रतिपा-दितं । ते शब्दाः पुन र्मुख्यो लाक्षणिक स्तथा व्यञ्जकश्चेति

त्रिधा। ते पुन "यौगरूढ़ाश्च रूढ़ाश्च यौगिकाश्चेति त्रिविधाः। समासशक्तो बहुविधत्वं निरूप्याभिधादिवृत्तित्रयं प्रतिष्ठापितं।

नानार्थानां शब्दानां भेदकाः खलु—

संयोगश्च वियोगश्च विरोधः सहचारिता।
सान्निध्यमन्यशब्दस्य देशः सामर्थ्यमौचितौ।
लिङ्गमर्थः प्रकरणं कालो व्यक्तिरिमा दिशः॥

अथार्थानां व्यञ्जकत्वस्य हेतवः—

बोद्धव्य-वक्तृ प्रकृति काकुप्रकरणैः सह।
देशकालादयश्चार्थे वैशिष्ट्याद् व्यङ्गबोधकाः॥

अथ ध्वनि-निर्णयात्मके तृतीयकिरणे रसाख्यध्वनेरात्मत्वं निरूप्य अभिधामूल-लक्षणामूलयो मध्ये लक्षणामूलो ध्वनिरविवक्षितवाच्यः स्यात्। तच्च द्विधा—"अर्थान्तरोपसंक्रान्तमत्यन्तं वा तिरस्कृत"मिति। अभिधामूलध्वनौ विवक्षितमपि वाच्यं लक्ष्यक्रमव्यङ्गोऽलक्ष्यक्रमव्यङ्ग श्चेति द्विविधः। एतेषां मेकपञ्चाशद् विभेदाः सलक्षणोदाहरणाः प्रतिपादिताः। प्रकृतिप्रत्ययादि-जन्यवस्त्वलङ्कारादिव्यङ्गानामुदाहरणानि प्रदर्श्य सङ्कर-त्रैविध्यञ्च निरूप्य सिद्धान्तितं—"ध्वने र्व्यापार-युगलं ध्वननं मनुध्वननञ्च, यत्र केवलं ध्वननं तदुत्तमं काव्यं, यत्र तु ध्वननानुध्वनने तदुत्तमोत्तममिति।"

अथ गुणीभूतव्यङ्गनिर्णयात्मके चतुर्थकिरणे ध्वनेर्वैशिष्ट्येऽष्टधा भेदः स्यादिति सूत्रयति—

स्फुटमपराङ्गं वाच्यमपोषकं कष्टगम्यञ्च सन्दिग्धप्राधान्यं तुल्यप्राधान्यकाकुगम्ये च अमनोज्ञञ्चेति गुणीभूतव्यङ्गस्य भेदानां सविस्तारमुदाहरणानि प्रदर्शितानि।

अथ रसभाव-तद्भेदनिरूपणात्मके पञ्चमकिरणे रसस्याभिव्यक्तिलक्षणं विभावानुभावेति भरतमुनिमतमुपन्यस्य रतिरस-रसाभासादिकञ्च यथावद् विलिख्य सामाजिकानां रसास्वादन-पद्धतिं संसूच्य च चमत्कारस्यैव रससारत्वं दर्शितवान्।

रसे सारश्चमत्कारो यं विना न रसो रसः।
तच्चमत्कारसारत्वे सर्वत्रैवाद्भुतो रसः॥

तत्र शृङ्गार-वीर-करुणाद्भुत-हास-भयानक-वीभत्स-रौद्र-शान्तवात्सल्य-प्रेमेति दृश्ये श्रव्येपि काव्ये रसा एकादशैवाङ्गीकृताः। तत्रभवान् प्रेमरस एव सर्वे रसा अन्तर्भवन्तीति निरूप्य भक्तिरसस्योदाहरणं दर्शितवान्। शृङ्गाररस-वर्णनावसरे तु सम्भोगविप्रलम्भभेदौ निर्णीय पूर्वरागस्य दशा-दशकं विरह-त्रैविध्यं मानद्वयं प्रदर्श्य मिथोऽवलोकनादि मधुपानान्तं सम्भोगप्रकरणं विलिख्य विप्रलम्भस्य विभेदान् सपरिकरान् निश्चिकाय। अवसरप्राप्तं विरहमानादिकं सप्रपञ्चं निर्वर्ण्य नायकभेद-तद्गुणावलिञ्च प्रदर्श्य नायिकाभेदादिकं सविस्तरं प्रतिपाद्य तासामष्टावस्थाः अभिसारिकादिकाः संसूच्य भावाद्यलङ्कारनिवहान् निर्णीतवान् इत्यमालम्बनविभावं विनिश्चित्य सखीदूतीप्रभृतिक मुद्दीपनविभावानुभाव-सात्त्विक-व्यभिचारि-प्रमुखान् भावोदयादीन् च सुस्पष्टं निरूपितवान्।

अथ गुण-विवेचननात्मके षष्ठकिरणे माधुर्यादिगुणत्रयं निरूप्य अर्थव्यक्तिरुदारत्वमिति समातिरिक्तगुणानपि समुदाजहार।

अतःपरं शब्दालङ्कार-निर्णयात्मके सप्तमकिरणे वक्रोक्ति-श्लेषानुप्रासयमकभाषादिश्लेषानुदाहृत्य विविधचित्रकाव्यं समुल्लिखितवान्।

अथार्थालङ्कार-निर्णयात्मकेऽष्टमकिरणे उपमादि सर्वानेवालङ्कारान् सप्रपञ्चान् समुदाजहार। अन्ते च शब्दार्थालङ्काराणां दोषान् विस्तरतः संदर्श्य प्रकरणं समापितवान्।

अथ रीति-निरूपणात्मके नवमे किरणे वैदर्भ्यादि रीति चतुष्टयं निर्णीतवान्।

अथ दोषनिर्णयात्मके दशमेकिरणे पदपदांशवाक्यार्थरसगतान् सप्रपञ्चान् तान् निर्णीतवान्।

ग्रन्थस्यास्य श्रीविश्वनाथचक्रवर्त्तिकृता "सुबोधनी" टीका वर्त्तते।

---

## ६। भक्तिरसायनम्।

श्रीमन्मधुसूदनसरस्वती-यतिवर-विरचिते उल्लासत्रयात्मकेऽस्मिन् ग्रन्थे प्रथमतः भक्तिसामान्यनिर्देशो यथा—

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्ति भक्तिरित्यभिधीयते॥

द्रुतचित्त-प्रविष्टभावस्यैव स्थायित्वं—स्थायिनः परमानन्दरूपता-चित्तस्य विषयाकारतायां वेदान्तसांख्ययोः सम्प्रतिपत्तिः—सर्वेषां शास्त्राणां रहस्यभूतोऽर्थोऽयं यद् विषयाकारतानिराकरण-पूर्वकं चित्तस्य भगवदाकारता-सम्पादनं; शास्त्रीयोपायैरेव भगवद् विषयकता सम्पद्येत—भूमिकाभेदेन ते उपायाः—

प्रथमं महतां सेवा तद्दयापात्रता ततः।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः॥ ३२

ततो रत्यंकुरोत्पत्तिः स्वरूपाधिगति स्ततः।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः॥ ३३

भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका॥ ३४

भक्तिविशेषप्रतिपादके द्वितीयोल्लासे चित्तद्रुतिभेदाद्भक्तिभेदः ( २ ), कामादिचित्तद्रावकाणां विस्तरशो विवृतिः ( ३—२४ ) भावान्तराणाञ्च चित्तद्रुतिजनकत्वाभावः ( २५—२६ ), धर्मोत्साहादिभावषट्कस्याभक्तिरूपता ( २७—२९ ), भक्तिरसनिर्देशः ( ३३—३४ ), रसानाञ्चातुर्विध्यं ( ३७—४० ), प्रकारान्तराणि ( ४२—७० ), भगवद्भक्तेः रसत्व-स्थापनं ( ७५—७८ )।

भक्तिरस-प्रतिपादके तृतीयोल्लासे रसस्वरूपं ( २ ), सामाजिक-निष्ठत्वं रत्यादेः, प्रसङ्गतः संलक्ष्यासंलक्ष्यक्रमध्वनिद्वयञ्च ( ३—१९ ), रस-प्रत्यायकत्वः, व्यञ्जनावृत्तेः ( २०—२१ ), स्व-

प्रकाशसंशास्त्र विगलितवेद्यान्तरा सुखात्मिका हि प्रतीतिः ( २२ )।

---

## ७। साहित्यकौमुदी।

श्रीमद्बलदेवविद्याभूषण-विरचिता कृष्णानन्दिन्याख्य-व्याख्यासंवलितेयं साहित्यकौमुदी। अग्निपुराणादिदृष्टां साहित्यप्रक्रियां भरतः संक्षिप्ताभिः कारिकाभि र्निबबन्ध। कारिकास्ता व्याचिख्यासु रयं वृत्तिकारः एकादशभिः परिच्छेदैः शास्त्रमिदं चकार। तत्र—

प्रथमे परिच्छेदे—काव्यप्रयोजनादिकं, तत्स्वरूपं, उत्तमादि काव्यभेदाः। द्वितीये—शब्दार्थभेदाः, वाचकादीनां स्वरूप-विभेदाः। तृतीये—अर्थव्यञ्जकतादिकं। चतुर्थे—ध्वनिभेदाः, रसस्वरूपं, रसविशेषाः स्थायिभावाः, व्यभिचारिणः, रसाभासादयः, लक्ष्यव्यङ्ग्यक्रमविभागः। पञ्चमे—गुणीभूतव्यङ्ग्यभेदाः। षष्ठे—शब्दार्थचित्रे। सप्तमे—दोषनिरूपणं। अष्टमे—गुण-विचारः। नवमे—शब्दालङ्काराः। दशमे—अर्थालङ्काराः। एकादशे च—भरतोक्त-परिशिष्टाः शब्दालङ्कारा अर्थालङ्काराश्च केचन।

---

## ८। षट्सन्दर्भाः।

श्रीमज्जीवगोस्वामिपादैः खलु शास्त्रप्रतिपाद्यं परमतत्त्वं तत्त्वादि-सन्दर्भ-चतुष्टयेन निरूपितं। तत्र किल वादान्तर-निरासपूर्वकं सम्बन्ध-तत्त्वं सुस्थापितम्। भक्तिसन्दर्भे हि अभिधेयतत्त्वमेव विस्तरशः प्रतिपादितम्। प्रीतिसन्दर्भे च पुरुष-प्रयोजनं सुनिर्धारितम्। भगवत्प्रीतेः सर्वश्रेष्ठत्वं, प्रीति-लक्षणादिकं, दृश्यश्रव्यकाव्ययो रसभावनाविधिः; द्वादशरस-विचारादिकञ्च सर्वं सुविन्यस्तम्। विस्तर-भिया नात्रोट्टङ्कि-तन्तत्। जिज्ञासायां मूलग्रन्थ एव द्रष्टव्यः।

---

## ९। भक्तिरसामृतासिन्धुविन्दुः।

## १०। उज्ज्वलनीलमणि-किरणः।

श्रीमद् विश्वनाथचक्रवर्त्तिपादै रचितमेतद् ग्रन्थद्वयं हि भक्तिरसनिरूपकं, पूर्वोक्तानां संक्षेप एव, तेन च नात्र विवरणी लिखिता।

---

## ११। काव्यकौस्तुभः।

नवप्रभात्मकेऽस्मिन् ग्रन्थे साहित्यकौमुदीवत् सर्वेऽपि विषया विनिबद्धाः, स्वाधीनभावेन यथायथं विचारयामास च

प्रमेयान् तत्रभवान् ग्रन्थकारः। नवीनालङ्काराः अपि केचनात्र निरूपिताः (विषादनादयः)। उदाहरणान्यपि पूर्वाचार्यलिखित-ग्रन्थरत्नेभ्यः प्रायशः समुदाजहारेति नात्र तद्‌विश्लेषणे प्रयास्यते।

ग्रन्थोऽयं खलु एतावत्कालं दुष्प्राप्य आसीत्। श्रीवृन्दा-वनीय-श्रीदामोदर-ग्रन्थागारे चत्वारि पत्राण्येव समुपलभ्येत-स्ततोऽनुसन्धानावसरे Mr. Stein नामकस्य महोदयस्य Catalogue ( ग्रन्थसूचिपुस्तकं ) दृष्ट्वा काश्मीरे राजधान्यां रघुनाथ-ग्रन्थागारे ४८ पत्रान्वितमेकमास्ते इति ज्ञातं, परन्तु बहुप्रयत्नसत्त्वेपि नोपलब्धमदः पुस्तकम्। वैमनस्येन स्थितस्य मे भगवत्कृपाभरं याचमानस्यैकदा राजपुतनाप्रदेशस्थ-जयपुर-निवासिना बन्धुवरेण श्रीमता श्रीगोविन्द-प्रसाद श्रीवास्तवेन वृन्दावनीयकुसुमसरोवर-वास्तव्येन श्रीमता कृष्णदास-महोदयेन च महाकृपया पुस्तकमेकं तत्रत्य गल्तेति ख्यातस्थानस्य ग्रन्था-गाराद् विलिख्य प्रेरितं दृष्ट्वा हर्षोल्लासभरेणाहं कर्त्तव्यविमूढोऽ-भवम्। पश्चात् परमकृपामयेन श्रीमता दीनेशचन्द्रभट्टाचार्येण हुगलीत्याख्य-स्थानस्य राजकीय-महाविद्यालयाध्यापकेन पुनातः ( Descriptive Catalogue of Mss. Poona, 1936, Vol. XII. No. 51 $_{1891-95}^{692}$ ) सप्तपत्रात्मकं पुस्तकमानाय्य मयि दत्तम्। एतत्त्रयमवलम्ब्यैवास्य पाठोद्धारः कृतः। श्रद्धेय-श्रीयुक्त हेरम्बचन्द्र-भट्टाचार्येण खलु विना व्ययेन मुद्रापितमेतत्। एतेषां महानुभवानां कृपामृते नाभूदियं पुस्तिकेति सप्रश्रयं कृतज्ञतां विज्ञापयामि तत्रभवतां सविधे। मुद्राकरप्रमादादिकं सर्वं दोषं क्षमयित्वा सहृदयहृदयाः सौहार्दतः समाधास्यन्तो-

त्याशास्ते। कृताञ्जलिः पुनर्विज्ञापयामि यस्मदनवधानतो दृष्टिमान्द्याच्च कतिपयस्थलेषु रकार-रुकारयो स्तथा बकार-वकारयोश्च व्यत्ययोऽभूदिति कृपया संशोध्य पठनीयमेतदिति सप्रश्रयं याचते—

दीन आश्रवः—
श्रीहरिदासदासः।

## शुद्धिपत्रम्।

| पृष्ठायां पंक्तौ च | अशुद्धं | शुद्धं |
|---|---|---|
| २।६ | गविष्टं | गर्विष्टं |
| ३।२४ | स्पंदेनैव | स्पन्देनैव |
| ३।२२ | यदुतुकर्षयाति | यदुतुकर्षयन्त्यपकर्षयन्ति। |
| ५।६ | शकयः | शक्यः |
| ५।१० | शूदादि | शूद्रादि |
| ५।१४ | गणादिनामप्यैकत्रात् | गुणादीनामप्यैक्यात्। |
| ६।११ | साथ | सार्थ |
| ६।१३ | वेवदत्त | देवदत्त |
| ६।१४ | पिण्डमातमूयात्यागाच्च | पिण्डमात्रस्यात्यागाच्च। |
| ६।१५ | गच्छतीव्यत्र | गच्छतीत्यत्र। |
| ६।१६ | लक्तमाण | लक्ष्यमाण |
| ७।१८ | शव्दार्था…द्वधा | शाब्दार्थौ…द्वेधा। |
| ८।३ | स चक्रो…स्तचक्रश्व | सचक्रो…स्त्वचक्रश्च। |
| ८।१७ | व्यजनया | व्यञ्जनया |
| ९।६ | वाचस्य | वाच्यस्य |
| ९।१३ | वधूचया | वधूचयो। |

| पृष्ठायां पंक्तौच | अशुद्धं | शुद्धं |
|---|---|---|
| १४।१४ | द्रुर्गतिः | दुर्गतिः |
| १७।८ | वृष्टया | वृष्ट्या |
| १६।६ | पित्राद्यपर्यातः | पित्राद्यर्पयातः |
| १६।२० | वलिगुणा··· | वलिगुणौ··· |
| २०।१० | ममज्जः | ममज्ज |
| २०।१७ | किमिन्नसे | किमीन्नसे |
| २०।२२ | नोत्वा | नीत्वा |
| २१।४ | वैदग्ध्याक्रान्तंवल्लभा | ...क्रान्तवल्लभा |
| २६।१० | बुधः | बुधैः |
| ३३।१ | वरिवारः··· | वैरिवार··· |
| ३५।१ | चतुर्थयोर्यगः | चतुर्थयो योंगः |
| ३५।८ | ···मिवात्तलः | · मिवानलः |
| ३६।७ | भगला... | मङ्गला··· |
| ४४।१६ | ...र्व्यंगस्तु | ···र्व्यंगैस्तु |
| ४७।४ | पुल्लार··· | फुल्लार··· |
| ४८।२२ | निर्दिष्टं | निर्दिष्टः |
| ५०।३ | पदव्यंग्य··· | पदव्यङ्ग··· |
| ५३।२० | वक्त्राक्तिः | वक्रोक्तिः |
| ५८।८ | यथोर्द्ध··· | यथोर्व··· |
| ५६।५ | पव | एव |
| ६४।१८ | नर्वाप्य | निर्वाप्य |
| ७०।६ | त्वद्वरि | त्वद् वैरि |
| ७१।१३ | पूव | पूर्व |
| ७१।१७ | स्तनया | स्तनयो |
| ७१।१६ | तद्यागां | तद्योगो |
| ७५।१० | गतेह | गतेहं |
| ७७।१२ | रूपकगुणा··· | रूपैकगुणा··· |
| ८०।२५ | श्रोणितढनाहता | श्रोणितटेनाहता। |

एवं बहुत्र रुकार-रूकारयो स्तथा बकार-वकारयोश्च विपर्ययः सञ्जातः, कृपया संशोधनीयं मर्षणीयञ्चेति सबहुमानं विज्ञाप्यन्ते तत्रभवन्तो महोदयाः।

---

॥ श्रीकृष्णो जयति ॥

# काव्यकौस्तुभः ।

## प्रथमा प्रभा ।

कलाभि र्निभृतः श्रीमान् राधया समलंकृतः ।
दीव्यत्कुवलयः सोऽयं विधु र्विजयतेतराम् ॥

प्रारिप्सितस्यास्य शास्त्रस्य काव्यांगत्वात् काव्यफलमेव फलमिति तावदाह ॥

कीर्त्तिः सार्वज्ञ्यमानन्दो धनादीनि च काव्यतः ।

सार्वज्ञ्यं देवमानवादि-प्राणिचेष्टावगतिरूपः ॥ आनन्दो रसानुभव-समुद्भूतः, धनं नृपति-प्रसादलब्धा हस्त्यश्वादिसंपत्, आदिना धर्मकाम-मोक्षाः । तत्र धर्मो भगवद्वन्दनादिः । कामो धन-द्वारकः । मोक्षो ज्ञानकाण्डे व्युत्पत्तिविधानादित्येतत् सर्वं काव्यादेव भवेदत स्तत्र पुंभिः सयत्नै र्भाव्यं । तस्य हेतुमाह ।

हेतुस्तस्य भवेच्छक्तिः शिक्षानिपुणता तथा ॥

शक्तिः पूर्वसंस्कारः, शिक्षा काव्यविदुपदेशः, निपुणता तु व्याकरणा-भिधानकोषच्छन्दःप्राचीनकाव्यादिनिभालनाद् व्युत्पत्तिः तस्य काव्य-स्योद्भवे कारणं । तस्य लक्षणमाह ।

कविना निर्मितं वाक्यं काव्यं।

चमत्कारकर-गद्यपद्यात्मना रचितं कवेर्वाक्यं काव्यं। उदाहरणं—

कोकिलकलकृतकंपां तनुजितशंपां प्रियां पश्यन्,
बपुरवनमितपयोदः समुदित-मोदः स माधवो जयति॥

गद्यपद्ययोश्चमत्कारकरत्वं चातुर्य्यादेव भवति। चातुर्य्यं तु युक्तिविशेषेणार्थ-नियोजनं। तथा हि वर्णयन्ति—शत्रो र्गदितवीर्य्यादे र्निर्जयान्नायकस्तुतिः। चातुर्य्यमिति पश्चात्तत् संवध्यते।

उदा०—उग्रप्राप्तधनुर्विद्यं सर्वज्ञं क्षात्रकंटकं।
गविष्टं खर्वयामास भार्गवं राघवाग्रणी॥

दृष्टान्तेनाल्पवर्णेन महतोऽर्थस्य कीर्त्तनं॥

उदा०—नृगवत् स गतिं याति यो ब्रह्मस्वापहारकः।
अत्र नृगवदित्यनेन नृगाख्यायिका-व्यक्तिः।

पद्येन लघुना वा स्याद्गंभीरार्थ-प्रकाशनं॥

यथा—निजभक्त-सुखार्थं यः कालमप्यतिवर्त्तते।
पुरुषाय नम स्तस्मै कस्मैचित्पुरुतेजसे॥

रावणेन निपीड़ितः सुरैरभ्यर्थितो भगवान् द्वापरे एव तद्विनाशकालं त्रेतां प्रकल्प्य तं विजघान, अदित्या तोषितश्च तत्सुखाय बलिवृद्धिकालमन्यथयन् बलिं दूषयामासेति पद्यादस्मात्प्रकाशते॥

अपारानन्दविज्ञप्ति र्या स्यान्न्यून-पदादिभिः।

यथा—सस्मिता मृगशावाक्षी गाढ़मालिंगिता मया।
मा मा मेति यदब्रूत तन्मे कृंतति मानसं॥

अत्र मेत्यनन्तरं पीडयेति पदमूनं सत्तस्याः सुखसिन्धुमग्नतां वोधयति।

हेतोरतिप्रसिद्धस्य न कुर्य्यादादरं क्वचित्॥

यथा—न युद्धेन भ्रुवोः स्पंदेनैव वीरा निवारिताः।

विख्यात-सहितोक्तिश्च तत्साद्दश्याय कल्पते ॥

यथा—युवामेव हि विख्यातौ त्वं वलैर्जलधिर्जलैः ॥

अत्राम्बुधिसाहित्येनोक्ति र्नृपतेस्तत्तुल्यतार्थे स्यात्।

ख्यातदोष-निरासश्च वोच्यते गुणवर्णनात्।

यथा—मुधा निन्दति संसारं कंसारि र्यत्र पूज्यते।

चातुर्य्यं कवितायां स्यादेवमाद्यर्थयोजनं ॥ स्फुटं, इदं काव्यलक्षणं कविवचन-मात्रे नातिव्याप्तं निर्मितमित्युक्तेः। वाक्यं रसात्मकं काव्यमिति तु रामः सहसा तया क्रीडतीत्यत्रातिव्याप्तं। रसात्मकवाक्यत्वात्। अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यमिति तु कुरङ्गनयनेत्यत्रातिव्याप्तं। तादृश-शब्दार्थरूपत्वात्। अथास्य शरीरादि-स्वरूपमाह ॥ शब्दार्थविग्रहं काव्यमिति संवक्ष्यते। शब्दार्थशरीरं काव्यमिति।

तस्यात्मा तु रसो व्यंग्य स्तदन्यः प्राण उच्यते।

रसभावादि र्व्यंग्यः काव्यस्यात्मा। वस्त्वादिस्तु प्राणः।

रसभाव-तदाभास-भावशान्त्यादिको गणः।
सर्वोऽपि रस्यमानत्वाद्रस-शब्देन कीर्त्तितः ॥ स्फुटं

उत्कर्षकारणाणि स्यु र्गुणालंकार-रीतयः ॥

ओजःप्रभृतयो गुणाः शौर्य्यादिवत् काव्यस्योत्कर्षकाः।

अनुप्रासोपमादयोऽलंकाराः कुण्डल-कङ्कणादिवत्।
वैदर्भीप्रमुखा रीतयस्त्वङ्ग-संस्थान-विशेषवत्।
दोषाः श्रुतिकटुत्वाद्या भवेयुरपकर्षकाः।

काणत्वादिवत् श्रुतिकटुत्वादयः काव्यमपकर्षयंतस्तस्य दोषाः स्युः। गुणादिषु ये यद्धर्मा यथा यदुत्कर्षं यत्यपकर्षं यांति च तत्तदूर्ध्वं वक्ष्यामः ॥

इति काव्यकौस्तुभे काव्यफलादि-निर्णयः

प्रथमा प्रभा ॥

# द्वितीया प्रभा ।

अथ काव्यविग्रहभूतयोः शब्दार्थयोः क्रमात् स्वरूपमाह ॥

मुख्यो लाक्षणिकः शब्दो व्यंजकश्चेति स त्रिधा ॥

मुख्यो वाचकः ।

अर्थास्त्वेषां क्रमाद्वाच्य-लक्ष्य-व्यंग्याः प्रकीर्त्तिताः ।

वाच्यादीनां स्वरूपमाह ।

वाच्यार्थोऽभिधया वेद्यो लक्ष्यो लक्षणया भवेत् ।
व्यंग्यो व्यंजनया तस्मात्तिस्रः शब्दस्य वृत्तयः ॥

एक एव शब्द स्तिसृभि र्वृत्तिभि स्त्रिविधः संस्त्रिविधानर्थान् बोधयति । यथा गंगाशब्दोऽभिधया प्रवाहं, लक्षणया तीरं, व्यंजनया तु शैत्यादीति । शक्तिरेवाभिधा वृत्ति र्व्यापारः क्रिया चेति पर्यायशब्दाः ।

अथाभिधाया वाचकस्य च लक्षणमाह ।

यया स्वाभाविको वृत्त्या शब्दस्यार्थोऽवगम्यते ।
साभिधा योगत स्तस्या वाचकोऽसौ प्रकीर्त्तितः ॥

उच्चारितमात्राच्छब्दाद्यः साहजिकोऽर्थः प्रतीतः तत्र शब्दस्य या वृत्तिः साभिधा । तदाश्रयः शब्दो वाचकः, यथा गंगेयमित्युक्ते गङ्गाशब्दात् साहजिकतयाऽवगते प्रवाहविशेषे तस्य वृत्तिरभिधा, तया युक्तोऽसौ तस्य वाचकः ।

अभिधा बोधयेदर्थं संकेत-सहचारिणी ।
अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा-संकेतः ।
संकेतो गृह्यते यस्माज्जात्यादिषु चतुर्ष्वतः ।
चतुर्धा वाचकः केचिज्जाताववेति मन्वते ।

जाति-गुण-क्रिया-संज्ञा-रूपेषु चतुर्ष्वर्थेषु ब्राह्मणः श्यामः पाचको डित्थ इत्यादय श्चतुर्विधाः शब्दाः क्रमात्संकेतवन्तः। जात्यादयश्च संकेतिताः कथ्यन्ते। तत्र जाति र्ब्राह्मणपिण्डादिषु ब्राह्मणत्वाद्या व्यवहारनिर्वाहिका। गुणः सजातीय-व्यावृत्ति-धीहेतुः श्यामादिः। श्यामादयो हि जंतून् सजातीयेभ्यो गौरादिजन्तुभ्यो व्यावर्त्तयन्ति। क्रिया पूर्वापरीभूतांगा पाकाद्या। संज्ञा तु वक्तृस्वेच्छा-कल्पित-शब्दरूपा स्वयं वाच्यवाचक-भाव-भाक्। एषु व्यक्तिधर्मेष्वेव तेषां शब्दानां संकेतः। तैर्व्यक्तीनामाक्षेपाद र्थक्रियाकारिता सिद्धा। व्यक्तिषु तु संकेतो नानन्त्याद्व्यभिचाराच्च। अनन्ता हि व्यक्तय स्तासु संकेतो ग्रहीतुमशक्यः। असंकेतित-ब्राह्मणव्यक्ते रिव शूद्रादि-व्यक्तेरपि ब्राह्मणशब्दात् प्रतीतिः स्यादगृहीत-संकेततया तौल्यादिति व्यभिचाराच्च तास्वसौ न ग्राह्यः ; नच गवादि-गतानां श्यामादि-गुणानां गुडादिगतानां पाकादि-क्रियाणां वालादि-गतानां डित्थादिसंज्ञानां च प्रत्यक्षतो भेदसिद्धौ व्यक्तिसंकेतपक्षोक्तो दोषः सम इति वाच्यं। गुणादीनामप्यैकत्वात्। तेषां भेदस्फूर्त्तिस्त्वाश्रयभेदादेव, न तु स्वतः। दर्पणादिभेदान्मुखभेदवत्। प्रत्यभिज्ञया धर्मिभेदग्रहस्य वाधादाश्रयभेद-हेतुकाद्भेदधीरिति। अथवा जातिवाच्येव सर्वोऽपि शब्दः। तथाहि— मुदिरमरकत-कोकिलादिष्वयं श्यामोऽयं श्याम इत्यादिप्रत्ययाविशेषा-च्छ्यामत्वादि गुडतण्डुलपाकादिष्वयं पाकोऽयं पाक इति पाकादित्वं। बालतरुणकौरोच्चारितेषु डित्थादिशब्देष्वयं डित्थोऽयं डित्थ इति डित्थादि-त्वमिति सर्वजातेरेवानुभवात्।

वाचको यौगिको रूढ़ो योगरूढ़श्च कीर्त्तितः।

तत्राद्यः पाचकादिरवयवशक्त्या वाच्यं बोधयति, मध्यमो मण्डपादिः समुदायशक्त्या। अन्त्यस्तु पंकजादिरुभयशक्त्येति।

अथ लक्षणाया लाक्षणिकस्य च लक्षणमाह॥

शक्यार्थवाधे तद्युक्तो ययार्थोऽन्यः प्रतीयते।

सा लक्षणा तया योगाच्छब्दो लाक्षणिकः स्मृतः।

जहत्स्वार्थाऽजहत्स्वार्था तथा स्यादुभयात्मिका ॥
द्विधा रूढ़ि फलाभ्यां सा ।

कलिंगः साहसीत्यादौ कलिंगादिशब्दो देशविशेषादिरूपे स्वार्थेऽसंभवन् रूढ़िमाश्रित्य यया स्वसंयोगसंबंधवन्तं पुरुषादिमन्यार्थं बोधयति, सा रूढ़िलक्षणा। गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गादिशब्दो जलमयादि-रूपे स्वार्थेऽसंभवन् प्रयोजनमुद्दिश्य यया स्वसामीप्यादि-संबन्धवन्तं तटादि मन्यार्थं बोधयति, सा फललक्षणा ; गङ्गातटे घोष इति प्रतिपादना-लभ्यस्य शैत्याद्यतिशयस्य बोधनमिहफलं जहत्स्वार्थेयं । देशादेः प्रवाहादेश्च स्वार्थस्य त्यागात् जहत् स्वार्थोयमिति द्वितीयान्यपदार्थो बहुब्रीहिः। कुन्ता गच्छन्तीत्यजहत्स्वार्था । स्वार्थानां कुन्तानां गतावत्यागात् । एवं छत्रिणः प्रयान्तीति छत्रिपदस्यैकसाथवाहित्वे लक्षणा। तत्त्वेन छत्रिण-स्तदन्येषां चाववोधनात्। काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातकेषु लक्षणा। तेन तेषां बोधनात्। सोऽयं देवदत्त इत्यादौ जहदजहत्स्वार्था तत्कालैतत्कालयोस्त्यागात् पिण्डमात्रस्यात्यागाच्च। एवं रथो गच्छतीव्यत्र चेति। गौणी स्याद् गुणयोगतः।

लक्ष्यमाणगुणे र्योगाद्गौणी लक्षणोच्यते ।

यथा सिंहो देवदत्त इति, गौर्वाहीक इति च। अत्र सिंहादिशब्दो मुख्यया वृत्त्या देवदत्तादिशब्देन सहान्वयमप्राप्नुवन् शौर्य्यजाड्यादि-समान-गुणसम्बन्धेन देवदत्तादिमन्यार्थं यया लक्षयति, सा गौणी वृत्तिः। भेदे-सत्यपि ताद्रूप्यावगतिः फलं।

कार्य्यकारणभावादि-सम्बन्धाद्बहुधा च सा।

सा लक्षणा। यथा मुक्तिः सत्सेवा, आयुर्घृतमित्यादि। अत्रान्य-वैलक्षण्येन कार्य्यकारित्वं फलं।

यथा च—हरिभक्तो हरि र्नृपभक्तो नृप इत्यत्र स्वस्वामिभावात्। अत्रा-संव्यवचस्त्वं फलं॥ क्वचिदन्वयानुपपत्तिः क्वचित्तात्पर्य्यानुपपत्तिश्च लक्षणा-

बीजं बोध्यं। गङ्गायां घोषः इत्यत्र प्रवाहे घोषान्वयानुपपत्त्या तीरे लक्षणा। कुंताः प्रवेश्यतामित्यत्र प्रवेशान्वये संभवत्यपि भोजने तात्पर्यानुपपत्त्या कुन्तधरेषु लक्षणेति॥

अगूढ़गूढ़रूपत्वाद्व्यंग्यस्येयं पुनर्द्विधा।

इयं फललक्षणाऽगूढ़व्यंग्या गूढ़व्यंग्या चेति द्विधा।

यथा—उत्कीर्णानि विचित्राणि नवोद्भिन्नानि सुभ्रुवः।
पिवन्ति दृग्भिरंगानि नन्दसूनो रहर्निशं॥

अत्रोत्कीर्णादिपदे स्तत्तत्साद‍ृश्यानि लक्ष्याणि निर्माणसौष्टवादीनि तु व्यंग्यानि। तानि च गूढ़ान्येव सद्‍हृदयमात्रवेद्यत्वात्। दृग्भिः पानस्यांसंभवात् सादरावलोकी लक्ष्यः। गाढ़ासक्तिस्तु व्यंग्या। सा चागूढ़ा वाच्यवत् सर्ववेद्यत्वात्। इत्थं निरुपितया लक्षणया योगाल्लाक्षणिकः शब्दः।

अथ व्यंजनाव्यंजकयो र्लक्षणमाह।

विरतावभिधादीनां परोऽर्थो बोध्यते यया।
व्यञ्जना सा तया योगाच्छब्दादि र्व्यञ्जको मतः॥

शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादभिधादिषु स्वं स्वमर्थं निवेश्य विरतासु यया परोऽर्थो बोध्यते, सा शब्दार्थयो र्वृत्ति र्व्यंजना। तया योगाच्छब्दोऽर्थश्च व्यंजकः। शाब्दार्थी चेति सा द्वेधा तयोराद्या पुनर्द्विधा।

एका स्यादभिधामूला लक्षणामूलिकापरा॥

तयोराद्यामाह।

शब्दस्यानेकार्थकस्याभिधायां
संयोगाद्यै रेकतो यंत्रितायाम्।
तस्यार्थं या बोधयेद्वाच्यभिन्नं
तन्मूलासौ व्यञ्जनाविद्भिरुक्ता॥

अनेक वाच्यस्य शब्दस्याभिधायां संयोगादिभिरेकस्मिन्नर्थे नियमितायां सत्यां तस्य या वृत्ति र्वाच्येतरार्थं बोधयेत्, साभिधामूला शाब्दी व्यंजना। स चक्रो हरिस्तचक्रश्च भातीति चक्रसंयोगवियोगाभ्यां हरिशब्दस्याभिधा भगवति नियमिता। भीमार्जुनावित्यर्जुनः पार्थः साहचर्यात्। कर्णार्जुनाविति कर्णो राधेयो विरोधात्। सर्वं जानाति देव इति देवो भवान् प्रकरणात्। चन्द्रो व्योम्नि विभातीति चन्द्रः शशी देशविशेषात्। मधुना कोकिलो मत्त इति मधु र्वसन्तः, मद-विधानसामर्थ्यात। प्रमत्ता मधुना वधूरिति तु मध्वासव स्तद्विधानयोग्यत्वात्। एवं संयोगवियोग-साहचर्य्य-विरोध-प्रकरणदेशसामर्थ्ययोग्यताभिरेकस्मिन्नर्थेऽभिधाया नियमनं स्यात्॥

यथा—घनप्रभः कोऽपि निरीक्षितो मया
हरिश्चलापांगि विदीप्तकौस्तुभः।
कृत्वा नखै र्यः कुचकुम्भिकुम्भकान्
करोति मुक्ताधवलां वनस्थलीं॥

अत्र कौस्तुभ-संयोगेन हरिशब्दः कृष्णमेवाभिधत्ते, सिंहस्तु व्यंजनया गम्यः। तयोरुपमा च। यथा वा—कलाभिर्निभृत इत्यादि। अत्र विधु-शब्दः प्रकरणेन भगवन्तमभिधत्ते। चन्द्रस्तु व्यजनया लभ्यः। ननु श्लेषस्यायं विषयः। परिवृत्त्यसहविध्वादिपदग्रहादिति चेन्न तस्यानवबोधात्। तथाहि नानार्थ-स्थले यत्रानेकत्र तात्पर्य्यग्राहकं प्रकरणादि युगपदवतरति न वा स श्लेषः। यथा—

सच्चन्दन-धवलकुचा प्रियावनी सा घन-छाया। अत्र नायिकाटवी च प्रतिपाद्यते। तत्र प्रकरणं युगपदवतरेन्नावतरेद्वा। यत्र त्वेकत्रैवावतरति तत्र व्यजनैव। यथा कलाभिरित्यादौ। अथ परामाह—

लक्षणा स्वीकृता यस्मै तच्छैत्यादि-फलं यया।
बोध्यते सा बुधैरुक्ता व्यञ्जना लक्षणाश्रया॥

गङ्गायां घोषः प्रतिवसतीत्यादिषु प्रवाहादिप्रतिपादनादभिधायां तटादि-प्रतिपादनाच्च। लक्षणायामुपक्षीणायां यया शैत्याद्यतिशयादि बोध्यते सा लक्षणामूला व्यंजना॥ फलेनाभिधा संकेताभावात् न च लक्षणा। हेत्व-भावात्। मुख्यार्थ वाधो मुख्यार्थ सम्बन्धः फलरूपैकतरच्चेति त्रयं तस्यां हेतुः। किन्तु व्यंजनैव तस्य प्रत्यायिकेति स्वीकार्य्यैव सा।

अथार्थी व्यंजनामाह।

वक्तृ वोद्धव्यवाच्यादिवैशिष्ट्येनार्थतो यया।
अर्थान्तरं प्रतीयेत सार्थी व्यञ्जना स्मृता॥

अथ तो वाच्यलक्ष्यव्यंग्यरूपात्। तत्र वाचस्य व्यंजकत्वं यथा—

विलुलित-चिकुरा विलुप्तचित्रा
त्वमसि वरश्रम-सूचकांगकान्तिः।
अथ सपदि कृतातिचारुवेशा
निवस मृगाक्षि वधूचयाऽभ्युपैति॥

अत्र स्मराक्रान्तेन कान्तेन भृशोपभुक्तां त्वां वीक्ष्य बध्वः परिहसिष्यन्ति स्नानादिभि स्तच्चिह्नान्यपनयेति वाच्याऽर्थो व्यंजयति। लक्ष्यस्य यथा—

व्रजपतिमति सुन्दरांगभंगी
कृतमहिलं नहि लक्षय त्वमक्षणा।
यदि तव भवने सुखाभिलाषः
सुमुखि चकास्ति चयेन वान्धवानां॥

अत्र बन्धुभिः सह गृहे सुखस्पृहां विहाय व्रजराजसुतं पश्येति जहत्स्वार्थया लक्ष्योऽर्थ स्तद्वीक्षादिनैव तव तारुण्यं सफलमिति व्यनक्ति। उभयत्र वक्तृवोध्ययो वैशिष्ट्यं। व्यंग्यस्य यथा—

अरविंदवनी क्षरन्मरन्दा
भ्रमदिन्दिन्दिरवृन्दवन्दितास्मिन्।

विलसत्यचलं पतत्रिराजी
ननु राजीवदलायताक्षि पश्य ॥

अत्र निर्जनोऽयं देश इति व्यंग्योऽर्थः । स च सुरतार्हत्वं तस्य व्यनक्ति । वाच्यस्य स्थलस्य वैशिष्ट्यात् ।

"अधुना मुदिरागमे मनोज्ञाः सखि रतद्युति-दीपिता वडभ्यः ।
निपतत्परिगर्जिताम्बुधारा-मुखरीभूतगृहान्तरा भवति ॥"

अत्र क्व कान्तमानेष्यामीति संकेतमिंगितेन पृच्छन्तीं दूतीं प्रति नेदानीं कुंजो रम्यः किन्तु भुवनमेवेति वाच्योऽर्थो व्यंजयति कालवैशिष्ट्यात् ।

अरविन्दमरन्दसंभृतः सखि यस्मिन् रमते समीरणः ।
नवपल्लवमन्दिरं जनः प्रतिपद्येत पदं शुभेन तत् ॥

अत्र कान्तेन कृष्णेन सार्द्धं तत्र मां संयोजयेति वाच्योऽर्थो द्योतयति देशवैशिष्ट्यात् । यत्र शब्दस्य प्राधान्येन व्यंजकत्वं तत्रार्थस्य गौणं तत् । यत्र त्वर्थस्य प्राधान्येन व्यंजकत्वं तत्र शब्दस्य तद्गौणमिति प्राधान्यसव्यपेक्ष्य शाब्दार्थौ च व्यंजनेत्युक्तिः ॥

इति काव्यकौस्तुभे शब्दार्थतद्वृत्तिनिर्णयो
द्वितीया प्रभा ॥

# तृतीया प्रभा ।

एवं काव्य-शरीरभूतौ शब्दार्थौ निरुप्येदानीं तदात्मभूतान् रसादीन्निरुपयति । तत्र रसस्वरुपमाह ॥

विभावैरनुभावैश्च सात्विकै र्व्यभिचारिभिः ।
व्यक्तो रत्यादिकः स्थायी विद्वद्भिः कथितो रसः ॥

एतद्व्याचष्टे ।

रत्यादेः स्थायिनस्तस्यालंबनोद्दीपनाह्वयं ।
निमित्तकारणं प्राज्ञै र्विभावः परिकीर्त्यते ॥
स्थायिनामाश्रयो यस्तु स स्यादालंबनो मतः ।
तेषामुद्दीपकः प्रोक्तो बुधैरुद्दीपनाभिधः ॥
ललनादि र्यथाख्याता यथा च विपिनादिकं ।
अनुभावस्तु रत्यादेरुपजातः स्मितादिकः ॥
सात्विकाः स्तम्भरोमाञ्च वैवर्ण्य स्वेद-संलयाः ।
स्वरभंगाश्रुकम्पाश्च रसज्ञै रष्ट कीर्त्तिताः ॥
स्थायिनः पोषको निर्वेदादिः संचारिसंज्ञकः ।
निर्वेदग्लानिदैन्यानि शंकासूया-मदश्रमाः ॥
आलस्यमोहस्मृतयो धृतिचिन्तामृतित्रपाः ।
आवेग-हर्ष-चापल्य-जाड्यगर्व-विषण्णताः ॥
स्वप्नौत्सुक्यावहित्थाश्च निद्रामर्षौ मतिस्तथा ।
औग्र्यापस्मारसंत्रासवोधव्याधिवितर्कका: ।
उन्मादश्चेत्यमी त्रिंशत्त्रयश्च व्यभिचारिणः ॥

रजस्तमोनिर्हीनस्य शुद्धसत्वस्य चेतसः ।
धर्मो निगदितः स्थायी रसोपादानतां गतः ॥
विभावादेः पृथक्त्वेन पार्थक्यं यात्यसावपि ॥

स च नवविधः ;

रतिहासौ तथा शोकः क्रोधोत्साह-भयानि च ।
जुगुप्साविस्मयशमाः स्थायिनो नव कीर्त्तिताः ।
चतुर्भिर्व्यंजकैरेभिः प्रबन्धे चारुतां गतैः ।
आस्वादांकुरकन्दोऽसौ व्यक्तः स्थायी रसायते ॥

यदुक्तं—

साधारण्येन विज्ञातैर्विभावाद्यैर्विमिश्रितः ।
च्युतवेद्यान्तरः स्थायी चमत्कारिसुखं रस इति ॥
आनन्दांशे विभावाद्यैर्वलिष्टैर्भग्नसंवृतिः ।
आत्मारत्याद्यवच्छिन्नो रसः स्यादिति केचन ॥

स च रसो नवविधः ।

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
वीभत्साद्भुतशान्ताश्च नवाचार्यैः रसाः स्मृताः ॥
श्यामः पाण्डु धूम्रो रक्तो गौरस्तथैव कालश्च ।
नीलश्च पिंगलश्चापि श्वेतश्चेति क्रमादमी॥ वोध्याः
नन्दात्मज-हलि-सीतापतिर्भार्गवकल्किनः क्रमतः ।
किरिबुद्धकूर्मकपिलाश्चापि रसानां स्मृता देवाः ॥

इति रससामान्यनिरूपणं ।

अथ विशेषेण ते निरूप्यन्ते। तत्र शृङ्गारः।

प्रोक्ता मनोऽनुकूलेऽर्थे रतिश्चेतोनुरञ्जनं।
शृङ्गारस्थायितामेति कान्तत्वे यस्य तस्य तत्॥

कान्तादन्यत्र तत्प्रीतिः पांचाल्याः श्रीहरौ यथा।
यूनोः सखीषु सखीषु मैत्री तत् स्यात्परस्परं॥

यत्र स्पर्शश्च हासश्च यथायथमुदीच्यते।
संभोगो विप्रलंभश्च शृङ्गारो द्विविधो मतः॥

तत्र संभोगः।

रतिरेषा विभावाद्यै रुचितै र्व्यक्तिमागता।
आलिङ्गनादिहेतुश्चेत्तदा संभोग उच्यते॥

यथा—त्वं मुग्धाक्षि विनैव कचुंलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृषि।

शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥

यथा वा—सख्या स्तवानंगरसोत्सवेऽधुना
ननर्त्त मुक्तालतिका स्तनोपरि।
उत्प्लुत्य यस्याः सखि नायक श्चलो
धीरं मुहु र्मे प्रजहार कौस्तुभं॥

मिथोऽवलोकमाध्वीकपानादि वहुधा ह्यसौ।

मिथोऽवलोको यथा—

एहीति पृष्ठगसखीरयाकैतवेन
व्यावृत्त्य यो मयि तथा विहितः कटाक्ष।

प्रत्यस्त्रवन्मम कटाक्षमवाप्य शान्तो
व्यन्तर्विभेद स निकुञ्जशराद्धवन्मे ॥

एवमन्ये तूह्याः ॥

अथ विप्रलम्भः।

अयुक्तयो र्युक्तयो र्वा यूनो: श्लेषाद्यभावत:।
प्रकृष्यति रति: सा चेद्विप्रलम्भ स्तदोच्यते।
पूर्वराग स्तथा मान: प्रवासश्चेति स त्रिधा ॥

तत्र पूर्वरागः—

रति र्या संगमात् पूर्वं पूर्वरागः सो कीर्त्यते ॥

यथा—इन्दीवरोदरसहोदरमेदुरश्री
वासो द्रवत् कनकवृन्दनिभं दधानः।
आमुक्तमौक्तिक-मनोहर-हारवक्षाः
कोऽयं युवा जगदनंगमयं करोति ॥

यथा वा—कनकाद्रि-निकेतकेतकी कलिता कल्पकलेवरद्युतिः।
हृदि सा मुदिरालिमेदुरे चपला मां किमलं करिष्यति ॥

अत्र दश दशाः।

लालसोद्वेग-जाड्यानि तानवव्याधिजागरा:।
उन्मादव्यग्रता-मोहा मृत्युश्चेति दशा दश ॥

मृत्युशब्देन मूर्च्छोच्यते।

अथ मानः।—एकत्र स्थितयो र्यूनोरन्योन्यमनुरक्तयोः।
रति श्चेद्बाधहेतुश्चेत्तदा मानः प्रकीर्त्यते ॥

यथा—स्वप्ने व्यलीकं बनमालिनोक्तं
पालीत्युपाकर्ण्य विवर्णवक्त्रा।

श्यामा विनिश्वस्य मधुत्रियामां
सहस्रयामामिव साभ्यनैषीत् ॥
निर्हेतुकोऽपि मानो गम्यः ॥

अथ प्रवासः। यथा—

मुग्धा सुधांशु-किरणे
जालगते भवनदाह-चकिताक्षी।
आदातुमवधिलेखं
प्रविशति भवनं निवार्य्य सह यान्तीः ॥

## अथ विभावेषु नायकभेदाः।

धीरोदात्तो धीरोद्धतश्च धीरप्रशान्तश्च।
धीरललितः क्रमेणैषां लक्षणानि लक्ष्याणि च ॥

क्षमी गभीरो निगूढ़गर्वो महासत्वः।
श्लाघाशून्यः शुभवाग्धीरोदात्तो दृढ़व्रतः कथितः ॥

यथा—वीरंमन्यमदप्रहारिहसितं धौरेयमार्त्तोद्धृतौ
निर्व्यूढ़व्रतमुन्नतक्षितिधरोद्धारेण धीराकृतिं।
मय्युच्चैः कृतकिल्विषेऽपि मधुरं स्तुत्या मुहुर्यन्त्रितम्
प्रेक्ष्य त्वां मम दुर्वितर्क्य-हृदयं धी गीश्च न स्पन्दते ॥

स्वश्लाघातिरतो मायी मत्सरी क्रोधन श्चलः।
अहंयुः कथितो धीरोद्धतोऽसौ रसवेदिभिः ॥

यथा—विच्छातच्छिद्रमन्विच्छ विमूर्द्धन्म्लेच्छदर्दुर।
प्रसर्पन् कृष्णसर्पस्त्वां भक्षयत्येष सक्षणः ॥

विनयो विवेकयुक्तो विपदां सहनश्च शान्तश्च ।
धीरप्रशान्तः स कथितो मुनिनातिधर्मिष्टः ॥

यथा—श्रुतवर्ण-धर्मनिरता निजप्रजाः
प्रतिरञ्जयन्ननुगत-क्रियोदयः ।
हरिभक्तिरत्नपरितुष्ट-मानसः
पृथिवीं प्रशास्ति नृपति र्युधिष्ठिरः ॥

परिहासपटु र्मृदुलः कलाकलापांचित स्तरुणः ।
कान्तावशग श्चिन्तारहितः कथितोऽत्र धीरललितोऽयं ॥

यथा—सुस्मेरां व्रजतरुणीं चलालकां तां
संपश्यन्मधुरिमभारसंनतांगीं ।
सानन्दः पुलककुलाकुलोज्ज्वलश्रीः
शुद्धान्ते शुभवति माधव श्चकास्ति ॥

एषोऽनुकूलदक्षिण-शठ-धृष्टतया चतुर्विधोऽभिमतः ।
निखिला श्चतुर्विधाः स्युस्ते नामी षोडशोदिताः कैश्चित् ॥

अनुकूलादीनां लक्षणानि ।

एकाश्रितोऽनुकूलः समः समस्तासु दक्षिणः प्रोक्तः ।
शठः एकस्यां रक्तो वहिः परस्यां धृतप्रणयः ॥
समन्तुरपि निःशंकस्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक् प्रोक्तोऽसौ धृष्ट-नामकः ।
एषां लक्ष्याणि मृग्याणि ॥

इति नायकभेदाः ॥

———

अथैषां गुणाः ।

श्रीमान् कृती कृतज्ञश्च रूपयौवन-मण्डितः ।
त्यागी दक्षोऽनुरक्तश्च तेजस्वी चतुरः सुधीरित्यादयः ॥

शोभा विलासो गाम्भीर्य्यं स्थैर्य्यं माधुर्य्यतेजसी ।
औदार्य्यं ललितं चेति सत्वजं स्याद् गुणाष्टकं ॥

तत्र शोभा—नीचे कृपाधिके स्पर्द्धा सत्य-शौर्य्यातिदक्षताः ।
उत्साहश्चानुरागश्च शोभा स्युर्मिलिता इमे ॥

यथा—स्वर्गध्वंसं विधित्सु र्व्रजभुवि कदनं सुष्ठु वीद्यातिवृष्ठया
नीचानालोच्य पश्चान्नमुचिरिपुमुखानूढ़कारुण्यवीचिः ।
अप्रेक्ष्य स्वेन तुल्यं कमपि निजरुषामत्र पर्य्यासिपात्रं
बन्धूनानंदयिष्यन्नुदहरत हरिः सत्यसंधो महाद्रिम् ।

विलासः—कल्पनं रम्यवेषादे र्विलासः कथ्यते बुधैः ।

यथा—विचित्रगुंजागिरिधातुचित्र-
विभूषितोऽसौ सखीभि र्मुरारिः ।
स्वयं च तान् कौतुकतः कलावान्
विभूषयंस्तै र्विजहार सार्द्धं ॥

गाम्भीर्य्यं—भीकोपशोकहर्षाद्यै र्गाम्भीर्य्यमविकारिता ।

यथा—नो कथ्यते किमु कथा विषयो यदि स्या-
न्नो गोप्यते किमु भवेद् यदि गोपनीयः ।
आपच्यमान इव हृद्व्रण एष भावः
कृष्णस्य कामपि दशां भजते न विद्मः ॥

स्थैर्य्यं—स्वनिश्चयादचलनं स्थैर्य्यं विघ्ने महत्यपि ।

यथा—प्रतिकूलेऽपि सशूले शिवायां निरंशुकायां च ।
व्यलुनादेव मुकुन्दो विन्ध्यावली-नन्दनस्य भुजान् ॥

माधुर्य्यं—सर्वथा स्पृहणीयत्वं माधुर्य्यं परिकीर्त्यते ।

यथा—निरस्य रत्नाभरणानि माधवः इत्यादि ।

तेजः—अवज्ञादे रसहनं तेजः सद्भिरुदीर्य्यते ।

यथा—व्रजाधिपे शूरसुतेच कंसेनाकृष्यमाने किल निग्रहाय ।
चुकूर्दिषु मंचमधिस्थितिज्ञस्ताम्रांवकः पश्य हरि र्विभाति ॥

औदार्य्यं—मित्रामित्रेषु यत्स्याम्यं तदौदार्य्यं प्रकीर्त्तितं ॥

यथा—आपीय पूतनायाः सहचरजननीगणस्य च स्तन्यं ।
सदयः सममेव ददौ जननीत्वं यः स एव पायात् ॥

ललितं—शृङ्गारप्रचुरा चेष्टा ललितं कथ्यते बुधैः ॥

यथा—विपिनलतादलकुसुमै र्विभूष्य राधां हरिः प्राह ।
त्वं सुमुखि कृष्णा-पक्ष प्रणयवती कुंजदेवता कापि ॥

इति नायकगुणाः ॥

---

## अथ तत्सहायाः ।

नायकस्य सहायाः स्युः सखाय स्तेषु केचन ।
रहस्यज्ञाः प्रियसखाः प्रियनर्मसखा स्तथा ।
दूताश्च त्रिविधा स्तेषु निसृष्टार्थोऽमितार्थकः ।
सन्देश-हारकश्चेति स्फुटमग्रे भविष्यति ॥

इति सहायाः ।

## अथ नायिका-भेदाः ।

परकीया स्वकीया च नायिका द्विविधा मता ।
ऊढानूढ़ा च तत्राद्या द्विविधा परिकीर्त्तिता ॥

अनूढ़ां वर्जयित्वात्र द्विविधा नायिका तु या।
मुग्धा मध्या प्रगल्भा च प्रत्येकं सा त्रिधा स्मृता।
धीराश्च स्युरधीराश्च धीराधीराश्च नायिकाः।
मुग्धां विहाय तेनैता बुधैः पंचदशोदिताः॥
लौकिके परकीया तु कन्यैवाभिमता भवेत्।
अलौकिके परोढ़ापि कृष्णानन्यैव संमता॥
शतं ता विंशतिश्च स्यु रवस्थाभिरथाष्टभिः।

तत्र कन्या—

पित्राद्यर्पणतः पूर्वं तदादेरप्यसंमतौ।
जातानुरागा कन्या चेत् परकीयैव संमता।
दुर्गार्च्चनपराः कन्या यथा श्रीगोकुले स्मृताः।
अन्यैर्व्यूढ़ा अपि स्नेहाद्गोविन्दार्पित-विग्रहाः।
करग्रह-विधिं प्राप्ता भर्त्तुर्वचन-तत्पराः।
स्वकीयाः कथिता स्तास्तु द्वावत्यां रुक्मिणी-मुखाः॥

अथ मुग्धादीनां लक्षणानि। दिङ्मात्रेण लक्ष्याणि च॥

प्रथमावतीर्ण-तरुणिम-मदनविकारा सखीवशा।
माने मृदुः सलज्जा दुःसहसुरता भवेन्मुग्धा॥

तत्र प्रथमावतीर्ण-तरुणिमा यथा—

धावत्याक्रमितुं जवात्परिसरं भ्रुत्योरपांगद्वयी
पौष्कल्यं हरतः कुचौ वलिगुणा रावध्य मध्यं ततः।
मुष्णीत श्चलतां भ्रुवौ चरणयो रुद्यन्महाविभ्रमे
राधाया स्तनुपत्तने नरपतौ बाल्याभिधे शीर्य्यति॥

दुःसहसुरता यथा—

नवसंगम-लालसेन नेत्रा मृगनेत्रा विमितास्मितांचितभ्रूः।
वरचंदन-कल्पितेन्दिरं सा मुखचन्द्रं कृत-सीत्कृतं बभार॥

मध्या विलसित-तरुणिम-सुरतिभरा परिमित-व्रीडा।
ईषत्प्रगल्भवचना निगूढ़चातुर्य्यभाक् प्रोक्ता॥

तत्र विलसित-तरुणिमा यथा—

वाद्यं किंकिणिमाहरत्युपचयं ज्ञात्वा नितम्बो गुणी
स्वस्य ध्वंसमवेत्य वष्टि वलिभियोगं ह्रसन्मध्यमं।
वक्षः साधु फलद्वयं वितनुते राजोपहारक्षमं
राधाया स्तनुराज्य मंचति नवे क्षौणीपतौ यौवने॥

निगूढ़चातुर्य्या यथा—

हरौ परिरम्भकलाभिलासे नवेति भामा मधुरं वदंती।
श्लिष्यंतमुच्चै स्तमथाभिरेभे यथा परानन्दनिधौ ममज्जः॥

मध्या धीरा प्रियं वक्ति सागसं वक्रया गिरा।

यथा—पद्मिन्यहं कुमुदिनी किल सैव सत्यं
सत्यं भवांश्च मधुसूदन एव मत्तः।
वामेन तामसुखयन्निशि दक्षिणेन
प्रातः प्रवोधयति मामपि लोचनेन॥

अधीरा सागसं कान्तं निरस्येत्परुषोक्तिभिः॥

यथा—साचिकन्धरममुं किमिक्षसे
यातु यातु सखि पूतनार्दनः।
वामरीतिचतुरां हि पामरीं
सेवतां परम देवतामिव॥

धीराधीरा तु वक्रोक्त्या सवाष्पा भाषते प्रियं।

यथा—नीत्वा हरिं दर्पणमन्दिरं प्रिया
दृष्टान्य-भोगांकमुवाच वाष्पभाक्।

न संकुच त्वं किल पंकजेक्षणा
प्रतीयसेऽत्र वमुपागतो यतः ॥

गदिता मदन-मदान्धा रतिरणनिपुणा सुपूर्णतारुण्या।
भावोन्नता प्रगल्भा वैदग्ध्याक्रांत-वल्लभा कविभिः ॥

तत्र मदन-मदान्धा यथा—

निर्गते रति-गृहात्सखीगणे यत्किमप्यकुत माधवो मयि।
नाविदं सखि समस्तमेव तत् सौख्यसिन्धु-विनिमज्जनादहं ॥

वैदग्ध्याक्रान्तवल्लभा। यथा—

श्लिष्टाश्लिष्यति कान्तेन चुम्बिता तं विचुम्बति।
लिखिता नखरैस्तन्वी लिखन्त्यपि न हीयते ॥

प्रगल्भा यदि धीरा स्यात्सावहित्थावहेलया।
उदास्ते प्रकृतात् कोपादादरं दर्शयेद्वहिः।

यथा—व्रतिनी वताद्य नाहं दधामि माल्यं वदामि ते वितथं।
इत्थं प्रेयसि विनयाद्गभीरयामास सा रुषं राधा ॥

अधीरा ताडयेत्कान्तं संतर्ज्य परुषोक्तिभिः।

यथा—आजन्मयोषिद्वध-लब्ध-दीक्षः प्रयाहि मे प्राङ्गणतो मुकुन्द।
इति ब्रुवाणातिरुषारुणाऽसौ जघान लीलाकमलेन कान्तं ॥

धीराधीरा प्रगल्भाचेद्युक्ता स्यादुभयो गुणैः ॥

यथा—साक्षाद्वर्त्तिनि जीविते मम कथं शाठ्यं त्वमालम्बसे
धिङ् मां त्वांच धिगावयोः सुजनतां धिक् प्रेम धिक् तद्यशः।
किं ब्रूमः पुरुषोत्तमोऽसि जगतां भर्तासि मय्येव ते
धूर्तत्वं न हि तेन ते गुणगणः किंचित्तरां हीयते ॥

## अथासामष्टावस्थाः।

प्रोक्ताभिसारिका विप्रलब्धा वासकसज्जिका।
विरहोत्कण्ठिता तद्वत्कलहान्तरिता परा।
प्रोषितप्रेयसी खण्डितार्था स्वाधीनभर्तृका।

क्रमेणासां लक्षणानि।

याभिसारयते कान्तं स्वयं वाभिसरत्यमुं।
रजनी-योग्यवेशासौ बुधैरुक्ताभिसारिका॥

वल्लभे कृत संकेतेऽप्यप्राप्ते सति दैवतः।
व्यथमानमना या स्याद्विप्रलब्धा तु सा स्मृता॥

वेशभूषणा-ताम्बूल-पुष्पाद्यै र्वासमन्दिरे।
सुसज्जा वीक्षते या तु कान्तं सा वाससज्जिका॥

हेतुना केनचित्कांते सविलम्बे निरागसि।
समुत्सुका भवेद्यातु विरहोत्कण्ठिताथ सा॥

कान्तं पादान्तगं कोपान्निरस्यानन्तरं तु या।
सन्तापं तनुते सा स्यात्कलहान्तरिता स्मृता॥

बहुकार्यवशाद्यस्या दूरदेशं गतः प्रियः।
तदनागति-दुःखार्त्ता सा स्यात्प्रोषितभर्तृका॥

उषित्वा मन्दिरेऽन्यस्या स्तद्भोगांकयुतः प्रियः।
प्रात र्यद्गृहमागच्छेत्खण्डिता सा रुषाकुला॥

कान्तो रतिगुणाकृष्टो यत्पार्श्वं न विमुञ्चति।
स्वाधीनभर्तृका सा स्यात्तदर्पित-मनस्तनुः॥

एतासामुदाहरणानि तु स्फुटत्वाद् ग्रन्थविस्तरभयाच्च न कृतानि।

## अथासां नायिकानामलंकाराः ।

अलंकाराः सत्वजाः स्यु र्विंशति र्यौवनोद्भवाः ।
भावो हावश्च हेला चेत्यंगजाः कीर्त्तिता स्त्रयः ॥

शोभा कान्ति स्तथा दीप्ति र्माधुर्य्यं च प्रगल्भता ।
धैर्य्यमौदार्य्यमित्येते सप्तैव स्युरयत्नजाः ॥

लीला विलासो विच्छित्ति र्विभ्रमः किलकिञ्चितं ।
मोट्टायितं कुट्टमितं विब्बोको ललितं तथा ।
विकृतं चेति विद्वद्भि र्दश प्रोक्ताः स्वभावजाः ॥

तत्र भावः । आद्यो विकारो भावः स्यान्निर्विकारस्य चेतसः ।

यथा—आधूलिकेलिशतशः सह येन येयं
प्रागल्भ्यचारु सुचिरं कलहायते स्म ।
तं श्यामसुन्दरमपूर्वमिवेक्षमाणा
सा गंडयोः पुलक-मंडलिकां तनोति ॥

हावः—नयनादिविकारेण व्यक्तोऽसौ हावतां व्रजेत् । असौ भावः

यथा—

लोलेन किञ्चिदलसेन च किञ्चिदक्ष्णा
सा यद् विभेद हृदयं व्रजराजसूनोः ।
तस्या स्तदैव हृदयेन समं तदन्त-
स्तेनाध्वनैव नु विवेश नवोऽनुरागः ॥

हेला—अभिलक्ष्ये विकारे तु हावो हेला स्मृता बुधैः ॥

यथा—एकमप्यतिरहोऽपि तमेकाप्युत्सुकाऽपि सखि नाहमपश्यम् ।
कोमलं कुवलयादपि हन्यात् साहसेन कतमेन कटाक्षः ॥

शोभा—सैव शोभा भवेद्रूपलावण्यादिभिरुर्जिता ॥

सैव हेलैव । यथा—

धृत्वा रक्तांगुलि-किसलयै र्नीपशाखां विशाखा
निष्क्रामन्ती व्रततिभवनात् प्रातरुद्घूर्णिताक्षी ।
वेणीमंसोपरि विलुठती मध्य मुक्तां वहन्ती
लग्ना स्वान्ते मम नहि वहिः सेयमद्याप्यथासीत् ॥

कान्तिः । प्रदीप्ता मदनोन्माथा सैव कान्ति रुदीर्य्यते ॥

सैव शोभैव । यथा—को वेद रे सखि लगिष्यति दृष्ट एव
को वेद जीवमपनेष्यति लग्न एव ।
प्रेङ्खोलिभिः परिमलैः सहसांधयाऽसौ
श्यामो रसः परिचितो वद कोऽपराधः ॥

दीप्तिः । वयोभोगादि-विस्तीर्णा सैव दीप्तिः स्मृता बुधैः ॥

सैव कान्तिरेव । यथा—रूपश्रियं मूर्त्तिमतीमिव प्रियां
मनो हरन्तीं स्मितवीक्षणामृतैः ।
तां रत्नपर्य्यंकगतां नतभ्रुवं
पश्यन्नमन्दां मुदमाप माधवः ॥

माधुर्य्यं । सर्वावस्थासु चारुत्वं माधुर्य्यं परिकीर्त्तितं ।

यथा—जलावगाहे च्युत-मेखलायाः शैवाल-वल्ल्यैव वभौ नितम्बः ।
अकैतवं रूपमहेतुहार्दं सर्वावस्थासु सदैकरूपम् ॥

प्रगल्भता । निःशंकत्वं प्रयोगेषु बुधाः प्रागल्भ्यमूचिरे ।

यथा—श्लिष्टा श्लिष्यति कान्तेनेत्यादि ॥ ( २१ पृष्ठायां )

धैर्य्यं । धैर्य्यं स्यादविकारित्वं सुखदुःखे महत्यपि ॥

यथा—आस्तां तदीय-नवयौवन-पूर्णवापी
कापीयमत्र न करोमि निमज्जनेच्छां ।

इच्छामि तं कमपि कालमलज्जमुच्चै
राक्रंदितुं सुमुखि हा प्रिय हा प्रियेति ॥

औदार्य्यं। सर्वदा विनयो विज्ञैरौदार्य्यं समुदाहृतं।

यथा—गुणमणिखनिरप्यसौ मुरारि
मयि कुरुते करुणां यदद्य कान्तः।
अविरलकलहांचिबुद्धिवृत्तौ
तदिह सखीनिकरस्य सुप्रसादः ॥

लीला—कान्तानुकरणं लीला रम्य-वेशक्रियादिभिः ॥

यथा—मृगमदकृत-चर्चा पीतकौषेयवासा
रुचिर-शिखिशिखण्डा बद्ध-धम्मिल्लपाशा।
अनृजु निहितमंसे वंशमुत्क्वाणयन्ती
कृतमधुरिपुवेशा मालिनी पातु राधा ॥

विलासः। विशेषो दयितालोके मुखनेत्रादि-कर्मणः।
यानस्थानासनादेश्च विलासः कथितो बुधैः ॥

यथा—कान्तमायान्तमालोक्य मन्दिरे मदिरेक्षणा।
सस्मिता सहसोत्तस्थौ गडंसंचल-कुण्डला ॥

विच्छित्तिः। स्वल्पापि वेशरचना विच्छित्तिर्द्युतिपोषकृत् ॥

यथा—मुक्तावलंविनासा मणिकंकण-चारुपाणियुगलासौ।
शोभां दधार राधा रसिकमणे मोहिनीमचलाम् ॥

विभ्रमः। विभ्रमः प्रेयसि प्राप्ते भूषास्थान-विपर्य्ययः ॥

यथा—अधात्काचीं कण्ठे जघन-भुवि हारं चरणयोः
कृशांगी केयूरे भुजलतिकयो नूपुरयुगं।
किमंगैरन्योन्यं मधुमथन-संगोत्सव-विधौ
प्रसादो व्यातेने प्रणय-पिशुनः स्वस्वविभवैः ॥

किलकिञ्चितं। गर्वस्मिताभिलाषादे र्भीकोपादेश्च मिश्रणं।
प्रमोदात् प्रेयसः संगे कथ्यते किलकिञ्चितं॥

यथा—न्यस्तेच यस्याः पुरतः कराब्जे वक्षोजयुग्मोपरि माधवेन।
सा गर्वकोपस्मिताभीतिलोलं तदाह यत्तस्य मनो जहार॥

मोट्टायितं। प्रव्यक्तिरभिलाषस्य कान्तवार्त्तासु चेद्भवेत्।
रोमाञ्चस्मित-जृम्भाद्यै स्तदा मोट्टायितं स्मृतं॥

यथा—राधा वाधामूलं न सा सखीभि र्जगाद पृष्टापि।
उदिते किल हरिचरिते मुहुर्ज जृम्भे सरोमाञ्चा॥

कुट्टमितं। दयिते कुचसंस्पर्शं मुखचुम्बादि कुर्व्वति।
हृद्यानन्दो वहिः कोपः स्मृतं कुट्टमितं बुधः॥

यथा—स्तनकनकघटीं पटीमुदस्य
स्पृशति हरौ वहुभंगिभंगुर-भ्रूः।
इयमसरसवाणि पाणि-रोधात्
कृतकरुषा परुषा कषायितासीत्॥

विव्वोकः

विव्वोकः कथ्यते गर्वादिष्टे वस्तुन्यनादरः॥

यथा—प्रियोक्तिलक्षेण विपक्ष-संनिधौ
स्वीकारितां पथ्य शिखण्डमौलिना।
श्यामातिवामा हृदयंगमामपि
स्रजं दराघ्राय निरास हेलया॥

ललित

सुकुमारोऽङ्गविन्यासो ललितं समुदीर्य्यते।

यथा—प्रसूनतल्पोदरसङ्गदूनं नूनं वपुर्मे सखि नैति निद्राम्।
इति स्मरायास विशीर्णचिन्ता सखीधियाऽसौ तमालिलिंग॥

विकृतं

त्रपादिभिरनुक्तस्य वक्तुमिष्टस्य चेद्भवेत् ।
प्रकाशं स्वचेष्टया प्राज्ञै स्तदा विकृतमुच्यते ॥

यथा—निशमय्य मुकुन्द मन्मुखाद् भवदभ्यर्थितमत्र सुन्दरी ।
न गिराभिननन्द किन्तु सा पुलकेनैव कपोलशोभिना ॥

इत्यलङ्काराः ।

---

## अथासां सहायाः ।

नायिकानां सहायाः स्युः सख्यस्तासु तु काश्चन ।
संमताः प्रियसख्यश्च प्रियनर्मादिका स्तथा ॥
निर्हेतुकहिताचाराः सदृक्षाः सुखदुःखयोः ।
अन्योन्य-हृदयज्ञाश्च सख्यः संपरिकीर्त्तिताः ।
प्रियसख्यस्तु ताः प्रोक्ता या युक्ता रसनर्म्मणि ।
प्रियनर्मादिका स्तास्तु याः स्वच्छायावदास्थिताः ।

एता प्रायेण दूत्यः स्यु स्तास्त्रिधाः कथिता बुधैः ।
निसृष्टार्था मितार्था च तथा सन्देशहारिका ॥

द्वयोरिंगितमादाय स्वयमुत्तरदायिका ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्था निगद्यते ।

मितार्था प्रमितं वक्ति कार्य्यान्तं या निगच्छति ।
यथोक्तं या वदेद् वृत्तं सा तु सन्देशहारिका ॥

इति सहायाः ।

## अथ स्वयंदूती ।

अत्यौत्सुक्यानुरागाभ्यां त्रपा-भ्रंशात् स्वयं यदि ।
व्यनक्ति स्वाशयं कान्ते स्वयंदूती तदा भवेत् ॥

यथा—पुष्पमार्गणा-मनोरथोद्धता कृष्ण मंजुलतया तवानया ।
रक्षितास्मि सविकासया पुरो विस्फुरत्सुमनसं कुरुष्व मां ।

इत्यालम्बनविभावाः ॥

## अथोद्दीपनाः ।

प्रासादा निष्कुटा वाद्यश्चन्द्रिका नवमल्लिका ।
ऋतवो मन्दवाताश्च बुधैरुद्दीपनाः स्मृताः ॥

अथानुभावाः ।

कटाक्षस्मित-दोर्मूल-व्यक्ति भूषणशिंजितं ।
कर्णकण्डूयनं व्याजसंभ्रमाद्यंग-संवृतिः ।
सख्याश्लेषादिकं च स्यादनुभावपदेरितं ॥

## अथ सात्विकाः ।

अष्टौ स्तम्भादयः सर्वे सात्विकाः संमता इह ।

निर्वेदमृत्यपस्मारान्वर्जयित्वा पुरोदिताः
यथार्हं त्रिंशदेव स्युः शृङ्गारे व्यभिचारिणः ।
निजोचिते विभावाद्यै रेवं व्यक्तिमुपागता ।
स्थायी सचेतसां चित्ते रतिः शृङ्गारतां व्रजेत् ।

उदा०—हवं मुग्धाक्षीत्यादि ।

इति शृङ्गारनिरूपणं ।

## अथ हास्यं।

विकृताकृतिवाग्वेषैर्हासश्चित्तस्य विस्तृतिः कथितः।
उचितैः स विभावाद्यैर्व्यक्तिं नीतः स्मृतो हास्यः॥

यथा—रामोयमस्माकमतीवमोदनः कपि-प्रियाणां गुणरुपचेष्टितैः।
हृद्यैरतुल्यातिशयैः सहानुजः किंत्वस्य नास्मान्सुखयत्यपुच्छता॥

## करुणः।

कृष्णं कालियबद्धं तदा विचेष्टं विलोक्य ते गोपाः।
अतिदुःखिता निपेतुर्विभिन्नमूला इवांघ्रिपाः सर्वे॥

प्राप्त्याशा विद्यते यत्र करुणस्तत्र संमतः।
इह गर्गादिवाक्येभ्यः सततं विलसत्यसौ॥

## रौद्रः।

प्रतिकूलतादि-जन्मा चित्तज्वालो भवेत् क्रोधः।
व्यक्तः स विभावाद्यैर्योग्यै रौद्रो रसः कथितः॥

यथा—व्रजाधिपे इत्यादि॥ [१८ पृष्ठायाम्]

## वीरः।

श्लाघाफले युद्धादौ चित्तासंगः स्थिरस्त्वरितः।
उत्साहः स तु योग्यैर्व्यक्तो वीरो विभावाद्यैः॥

यथा—तुरग-दनुसुतांगग्राव-भेदे दधानः
कुलिशघटितटं कोदण्डविस्फूर्जितानि।
तदुरुविकटदंष्ट्रोन्मृष्टकेयूर मुहः
प्रथयतु कुशलं वः केशवो वामवाहुः॥

दानवीरो धर्मवीर श्चोह्यः॥

## भयानकः

घोरेक्षणादिभिश्चित्त-चापल्यं भयमुच्यते।
उचितै स्तैर्विभावाद्यैर्व्यक्तमुक्तो भयानकः॥

यथा—आविष्कृतं विश्ववपुर्वकारिणा
निरीक्ष्य दंष्ट्रा-विकटं कपिध्वजः।
तुषार-शुष्यद्वरनीरजानन
स्त्रस्यन्मना नैव शशाक भाषितुं॥

## वीभत्सः

अहृद्यवस्त्वनुभवाद् जुगुप्सा हृद्विमुहनं।
उचितैः सा विभावाद्यैर्व्यक्ता वीभत्स उच्यते॥

यथा—घनरुधिरमये त्वचा पिनद्धे पिशित-विमिश्रित विस्रगंधभाजि।
कथमिह रमतां बुधः शरीरे भगवति हंत रते लवेप्युदिते॥

भयानकेऽथ वीभत्से भगवद्रतिमिश्रणात्।
भवेदानन्दरूपत्वमिति प्राहुर्मनीषिणः॥

## अद्भुतः

अलौकिकेक्षणाद्युत्था विस्मय श्चित्तविस्तृतिः।
उचितैः स विभावाद्यैर्व्यक्तिं नीतोऽद्भुतः स्मृतः॥

यथा—वदने निजवालस्य फुल्लपंकजसंनिभे।
विश्वं सव्रजमालोक्य यशोदा चित्रिता वभौ॥

शमस्थायी भवेच्छांतो निर्वेदस्थायिकः क्वचित्॥

क्रमेणोदा०।—

गोविन्दं सुखसिन्धुं चैतन्यघनं हृदि ध्यायन्
अंभोधिरिवाक्षुभितो मार्कण्डेयो मुनि र्जयति ॥

स्तावका स्तव चतुर्मुखादयो भावकाश्च भगवन्भवादयः।
सेवकाः शतमखादयः सुरा वासुदेव यदि के तदा वयं ॥

---

## अथ रसानां विरोधः।

आद्यः करुणविभत्स-रौद्रवीर-भयानकैः।
भयानकेन करुणेन च हास्यो विरोधभाक्।
हास्योज्वलाभ्यां करुणो भयांकेन च रौद्रकः।
वीरः शान्तभयांकाभ्यां वीभत्सः शुचिना सह।
शान्तस्तु वीरश्रृङ्गाररौद्रहास्य-भयानकैः।
भयांको हास्यशान्ताभ्यां वीररौद्रोज्ज्वलै स्तथा ॥

## अथैषां मैत्री।

वीरस्याद्भुतरौद्राभ्यां सह मैत्री प्रकाशते।
भयानकस्य वीभत्सेनाद्भुतेन शुचे स्तथा।
श्रृङ्गारहास्ययो स्तद्वद्वीर-श्रृङ्गारयोश्च सा ॥

इति नव रसा निरुपिताः ॥

## अथ भावः।

देवता-नृपपुत्रादिविषया या रति र्भवेत्।
स भावो व्यभिचारी चेत् प्राधान्यं प्रतिपद्यते ॥

उदा०— सत्यानन्ताचिन्त्यशक्त्येकपक्षे
सर्वाध्यक्षे भक्तरक्षातिदक्षे।

श्रीगोविन्दे विश्वसर्गादि-कन्दे
पूर्णानन्दे नित्यमास्तां मति र्नः॥

विष्णावन्यदेवता-विषया रतिर्भाव एव, विष्णुविषया तु भावश्च रसश्च। देवतात्वादिना कांतत्वेन च भावकेषु तस्योदयात्। यदाह भगवान्कपिलः।

येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टमिति॥

प्रधानीभूतो व्यभिचारी यथा—

चेतो मदीयं चिकुरे निपत्य
मुखाम्बुजामोद-विलासिमुक्ते।
तस्याः समारुढ़-कुचाद्रिसानु
र्प्रेम्णा नाभिसरसि न्यमांक्षीत्॥

अत्र प्राधान्येन स्मृतेरवभासाद्भावत्वं। यद्यपि "न भावहीनोस्ति रसो न भावो रसवर्जितः। परस्परकृता सिद्धि रनयो रसभावयो"रित्युक्तेः परम विश्रान्तिस्थानेन रसेन सहितो व्यभिचारी, तथापि करग्रहप्रवृत्तराजभृत्यवत्प्राधान्यमसौ भजते।

## अथाभासाः।

रसो भावोऽप्यनौचित्य-प्रवृत्त्याभासतां व्रजेत्।

तत्र रसे स्थायिविभावानुभाव वैरूप्यमेवानौचित्यं। अनेकनेतृ-निष्ठानुभयनिष्ठा-गम्यागता चेद्रति स्तदा स्थायितायां तस्य वैरूप्यं। वैदग्ध्यौज्ज्वल्यतौल्याभावो विभावो समयातिक्रमग्राम्यधाष्ट्र्यानि त्वनुभावे चेति शृङ्गारेनौचित्यं।

हास्ये गुर्वाद्यालम्बन श्चेत् हासः। वीरे ब्रह्मवधविषयश्चेत् उत्साहः। रौद्रे गुर्वादिगतश्चेत्क्रोधः। भयानके वीरे पुंसि चेद् भीतिः। एव

न्यदुन्नेयं। भावे तु कृत्रिमस्तुति-त्रपादिकमनौचित्यं तच्च वरि वारयाषिद्गतं बोध्यं। लक्ष्याण्युह्यानि।

## अथ भावशान्त्यादयः।

भावस्य शान्ति रुदयः सन्धिः शवलता तथा॥

क्रमेणोदा०—कान्तं पादान्तगं वीक्ष्य मानिनी विनतानना।

अत्रामर्ष-शान्तिः।

अभ्रं नभसि पश्यन्त्या स्तन्व्याः पुलकितं वपुः॥

अत्र हर्षोदयः।

दृष्ट्वा पतिं सपत्नीं च द्विधेवाभून्मृगेक्षणा॥

अत्र हर्षोद्वेगयोः सन्धिः।

रुष्टः पति र्मनो मत्तं खलो दोषवलोक्तिकः।
मित्रं वेशभरैश्चित्रं कुर्म हे किं भणाधुना॥

अत्र भयचापल्य-शंकौत्सुक्यानां शावल्यं।

एवं काव्यात्मा रसादि र्व्यंग्यो दर्शितः; तत्प्राणो वस्त्वादि र्व्यंग्यस्तूत्तमकाव्यभेदवर्णने वक्ष्यते॥

इति काव्यकौस्तुभे रस-निर्णय-
स्तृतीया प्रभा॥



# चतुर्थी प्रभा ।

## अथ रस-धर्मान् गुणान्निरूपयति ॥

रसस्योत्कर्षका धर्मा वर्णादिव्यंजिता गुणाः ।

अंगिनो रसस्योत्कर्षका धर्मा गुणाः यथात्मानः शौर्यादयः । वर्णादयस्तु तेषां व्यंजकाः । शौर्य्यादीनामिव देहादयः ।

माधुर्य्योजः प्रसादाख्या स्त्रय स्ते परिकीर्त्तिताः ।

क्रमेणैषां लक्षणानि व्यंजका वर्णादयश्च दर्श्यंते ।

चित्तद्रुतिमयो ह्लादो बुधैर्माधुर्यमुच्यते ।
संभोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ।
स्वांत्ययुक्शिरसो वर्गाष्टुवर्जा रेफणौ लघू ।
सुसमासोऽसमासश्च माधुर्यै घटना तथा ।

शिरसि स्वपंचमयुक्ताष्टवर्गवर्जा वर्गाः । रेफणाकारौ ह्रस्वांताविति वर्णाः ॥

सुसमासो मध्यसमासः असमास ईषत्समासश्चेति समासः । पदान्तरयोगे घटना चालंकुरु संगतामित्यादिरुपा । एता माधुर्य्यस्य व्यंजिकाः ।

उदा०—सततं संतनोत्यस्या नितांतन्तांतचेतसः ।
दुरन्ता कान्त-चिन्तेय हन्त सन्तापसंततिः ॥

दीपनं चित्तविस्ताररूपमोजः प्रकीर्त्तितं ।
वीरवीभत्सरौद्रेषु भजत्यधिकतां क्रमात् ।

दीपनं दीप्तिः ।

द्वितीयतुर्य्ययो र्योगः पूर्वाभ्यां रेण तुल्ययोः ।
शषौ टु दीर्घवृत्तिश्च घटनौद्धत्यमोजसि ।

वर्गस्य प्रथमतृतीयाभ्यां सह द्वितीय-चतुर्थयो र्योगः। यथा कक्खटी, स्रवास इत्यादिः। रेफेण सह व्यंजनस्य योगः स चोपर्य्यध उभयत्र च यथा—अर्कः वक्र दुर्ग्रहः। तुल्ययो र्योगस्तेन तस्यैव यथा मत्तोद्दामादि। शषौ ट ठ ड ढाश्चेति वर्णाः। वृत्तिदैर्घ्यं दीर्घसमासः। दृढो गुंफश्चेत्योजसो व्यंजकाः॥

उदा०—उद्वृत्तमत्तदैत्येन्द्र हृत्याविक्त-नखोद्भटः।
दंष्ट्रा कटकटात्कारक्रूरवक्त्रोऽवताद्विभुः॥

सितामिवांवु यश्चित्तं शुष्कें धनमिवानलः।
व्याप्नोति स प्रसादः स्यात्सर्वत्र विहितस्थितिः।
शब्दाः श्रुतिगता स्तस्य द्योतका वाच्यवोधकाः।
प्रसादस्य सार्वत्रिकत्वान्न वर्णगतो नियमः॥

उदा०—मनसः परमाणुतां वदन्तः कथमद्यापि न तार्किका स्त्रपंते।
कनकाचलजित्वरस्तनोनां तरुणीणामपि यत्र संनिवेशः॥

नवरसोजन्या स्तिस्रोवस्थाः सहृदयचेतसि भवन्ति। द्रुति विस्तारो विकाशश्चेति। तत्र शृङ्गारकरुण शान्तेभ्यो द्रुतिः। वीरवीभत्सरौद्रेभ्यो विस्तारः, हास्याद्भुतभयानकेभ्यस्तु मुखनेत्रगति-गतो विकाशः।

गौणी शब्दार्थयोश्चापि वृत्तिरेषामुदीरिता॥ एषां गुणानाम्॥

इति काव्यकौस्तुभे गुणनिरूपणं
चतुर्थी प्रभा॥

---

# पंचमी प्रभा।

एवं गुणान्निरूप्य बहुवक्तव्यत्वात् काव्यभेदान्तिम-धर्मत्वाच्च क्रम-प्राप्तानप्यलंकारान् विहाय रीतिमाह।

वर्णादिघटना रीतिः कथ्यते गुण-हेतुका।
वैदर्भ्यादि-विभेदेन चातुर्विध्यं भजत्यसौ॥

अङ्गसंस्थानविशेषवद् गुणहेतुको वर्णविन्यासविशेषो रीतिः। सा खलु वैदर्भी गौड़ी पांचाली लाटी चेति चतुर्विधा भवति। आदिना समासः।

क्रमेणासां लक्षणानि—

मध्यवृत्तिरवृत्ति र्वा माधुर्य्यादिगुणान्विता।
वैदर्भी वृत्तिरेतस्याः पाकश्छन्दश्च पोषकृत्॥

वृत्तिः समासः। रसालपाको वृंताकपाकश्चेति पाकद्वयं। तत्राद्य स्तस्याः पुष्टिकृत्। छन्दश्चेन्द्रवज्रा-वसन्ततिलक-रथोद्धतादिकं। उदा०—

विधाय पुष्पावचयं चलन्त्या मंजीरनादो मदखंजनाक्ष्याः।
मंदोऽप्यमंदं हरिमंजनाभं कुंजेशयं जागरयांचकार॥

पूर्वपूर्वदशायाः परपरचारुतायां रसालपाकः सहृदयैकसंवेद्यः। वैपरीत्ये तु वृंताकपाकः।

यथा—आलोकितं कुटिलितेन विलोचनेन
संभाषणं च वचसा मनसार्धमर्धम्।
लीलामयस्य वपुषः प्रकृति स्तवेयं
राधे क्रमो न मदनस्य न वा मदस्य॥

अत्र तुर्य्ये पादे पूर्वः। लीलामयस्य वपुष स्तव राधिकेयं कोऽपि क्रमो नु सहजः किमु कृत्रिमो वेति पाठभेदे तु परः। अत्र वैदर्भ्यां सत्यामपि विरसता तत्पोषक-पाकविरहात्। "वैदर्भी गर्भिणीव स्फुरति रसमयी कामसू

रुक्मिणीवे" त्यत्र तथाविधया रचनया स्थितापि वैदर्भी न चमत्करोति। तत्पोषक च्छन्दोविरहात्; गौड्यनुगुणं ह्येतच्छन्दः॥

गौडी परुषवर्णा स्याद्दीर्घवृत्तिर्युतौजसा।

उद्धान्तरा दीर्घसमासा गुणेनौजसा युक्ता गौडी।

यथा—तुरगदनुसुतांगेत्यादि।

यथा वा—कालियस्य फणारत्नकुट्टिमं कुट्टयन् पदसरोज-घट्टनः।
मङ्गलानि वितनोतु ताण्डवे पण्डितः सर्वशिखण्डशेखरः॥

भूय्यनुप्रासभाक् चापि।

अनुप्रास-प्राचुर्य्येऽपि गौडीत्यर्थः। यथा—
गौडो गाढ़ोपगूढ़प्रकट हठघटा गर्वगर्मेव गौरी॥

गुणान्तरानुगुणोऽप्यनुप्रासः प्राचुर्य्याद्गौडी मनुबध्नाति। यथा—
दुं दुं दुं दुं वाद्यं दुन्दुभीनां

पांचाली तूभयात्मिका।

गौढी-वैदर्भ्योरंशाभ्यां पांचाली स्यात्। यथा—

अयमुदयति मुद्राभंजनः पद्मिनीना-
मुदयगिरि-वनाली बालमन्दारपुष्पम्।
विरह-विधुर-कोकद्वन्द्ववन्धु र्बिभिन्दन
कुपित-कपिकपाल-क्रोडताम्र स्तमांसि॥

कथाप्रायार्था माधुर्य्यप्रायगुणा पांचालीति केचित्।

लाटी तु शिथिला वर्णै र्मृदुभि र्लादिभि र्युता॥

यथा—लोलालिमालामिलिता ललिता मालती लता।
जलदा कलिते काले कराले विलयाय मे।

लाटानुप्रासबाहुल्येप्येषानुसर्त्तव्या। एवमेवोक्तमन्यैः।

गौडी डम्बरबंधा स्याद्वैदर्भी ललितक्रमा।

पांचाली मिश्रभावेन लाटी तु मृदुभिः पदैरिति यद्यपि गुणग्रन्थादियं गतार्था, तथाप्यत्र विशेषावगतये निरूपिता ॥

इति काव्यकौस्तुभे रीतिनिर्णयः

पंचमी प्रभा ॥

---

# षष्ठी प्रभा ।

## अथ दोषानाह ।

हृदये निविशद्भि र्यैः क्षीयते काव्यचारुता ।
दोषा स्ते कथिताः प्राज्ञैः पदवाक्यार्थ-संस्पृशः ॥

अत्रार्थो व्यंग्योऽपि रसादि र्ग्राह्यः ॥

तत्र पददोषानाह ।

दुष्टं श्रुतिकटु व्यर्थं नेयार्थमसमर्थकं ।
अवाचकं त्रिधाश्लीलं संदिग्धं च्युतसंस्कृति ॥
ग्राम्यं स्यादप्रतीतं च विरुद्धमतिकृत्तथा ।
अविमृष्टविधेयांशं क्लिष्टं च पदमूज्जगुः ॥

श्रुतिकट्वादिपदं दुष्टमूज्जगुरिति सम्बन्धः ।

तत्र रुक्षाक्षरं श्रुतिकटु ।

यथा—स्रष्ट्रा विनिर्मिता तन्वी ।

व्यर्थं यथा—मोदं मे विदधाति च । अत्र चेति व्यर्थं ।

नेयार्थं रूढ़िफलाभ्यां विना लाक्षणिकं। यथा—भाति गोवर्द्धनः दस्य पुष्पवद्भिः कपिध्वजैः। कपिध्वज-शब्देनात्रार्जुनवृक्षा लक्ष्याः।

असमर्थं यथा—कासारं हन्ति गोविन्दः, गत्यादौ हन्त्यादेः सामर्थ्यं नास्ति।

अवाचकं यथा—

मां विधत्तेऽनुकम्पया। अत्र पुष्टौ विधानं न वाचकं। व्रीडाजुगुप्सा अमंगलावबोधित्वात् अश्लीलं त्रिधा। यथा—

भग तव बृहद्भावि मुकुन्द भजनेन विट्।
सूनो स्ते नैव नष्टस्य पुन र्दृष्टिं गमिष्यसि॥

अत्र भगविट् नष्टशब्दाः क्रमाद्व्रीडादि-द्योतकाः।

द्व्यर्थं—संदिग्धं, यथा—प्रयान्ति पक्षिणो नद्यां ; अत्र नद्यां सरिति प्रयांतीति द्यामाकाशं न प्रयान्तीति च प्रतीयते।

व्याकरणविरुद्धं च्युतसंस्कृति यथा—रामा वाधंति मानसं।

ग्राम्यं यथा—सुकटेः स्मरकण्डूति रस्या वर्द्धत्यहर्निशं। अत्र कटिकण्डूति पदे॥

एकशास्त्रख्यातम् अप्रतीतं यथा—

इदं वीतानुमानेन साधितं केन दूष्यतां। केवलान्वय्यनुमानं वीतमुच्यते नैयायिकैः॥

विरुद्धमतिकृद्यथा—

सर्वाणीपतिरेवात्र तुष्यत्याशु निजाश्रिते॥ अत्र सर्वाण्याः पत्यन्तरधी-जननात्तथा।

अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयोंऽशो यत्र तत्, विधेयांशस्य प्राधान्येनानिर्देशः खलु समासेन न्यग्भावाद्भवति। तद्यथा—

तव तन्वि कटाक्षोऽयं षष्ठवाणो मनोभुवः ।
प्रविश्य हृदये कृष्णः वृथा दर्पं चकार यत् ॥

अत्र वाणस्य षष्ठत्वं, दर्पस्य वृथात्वं च विधेयं, तत्तथा न प्रतीयते, समासेन गुणीभावात् । तेन षष्ठो वाण इति भर्त्तु दर्पं व्यर्थमिति च वाच्यं ।

व्यवहितार्थ-प्रतीतिकं क्लिष्टं यथा—

हरिप्रिया-पितृवधूधारया तुलितं वचः ।

अत्र हरिप्रिया श्रीस्तत्पिता समुद्र स्तद्वधू र्गंगा तस्या धारया तुल्यं वाक्यमिति योज्यं । अप्रयुक्त मनुचितार्थं च पदमिह पठन्ति । यथा— ममेष्टदैवतो भाति सोऽयं हलधरानुजः । अत्र दैवत-शब्दः पुंसि न प्रयुज्यते । हलधर-शब्दः कृषिकारित्व-व्यंजनादनुचितार्थः ॥ एते केचन दोषाः पदांशे वाक्ये च संभवंतो मृग्याः ॥

## अथ वाक्यदोषानाह ।

प्रतिकूलाक्षरं वाक्यं कुसन्धि च विसन्धि च ।
अधिकन्यूनकथितपदमक्रमगर्भितं ॥

पतत्प्रकर्षं संकीर्णं लुप्ताहतविसर्गकं ।
अभवन्मतयोगं च हतवृत्तं च दोषभाक् ।

प्रतिकूलाक्षरादिवाक्यं दोषभागित्यनुषंगः ।

तत्र प्रतिकूलाक्षरं यथा—नन्दसूनुरमन्दश्री रनन्दत् केशिनं दरन् ।

अत्र वर्णा वीरप्रतिकूलाः ।

कुसन्धि यथा—पटवायाहि रंतव्यं ।

विसन्धि यथा—त्वन्नेत्रे अंवुजे इमे ।

अधिकपदादीनि त्रीणि यथा—

यान्त्या रविसुतां दृष्टो घनाभश्यामलो युवा।
करोति सखिभिः केलिं चित्रकेलिपरैः सह॥

अत्राद्ये पादे मयेति पदं न्यूनं। द्वितीये आभेत्यधिकं, तुर्य्ये केलीति कथितं च।

अक्रमं यथा—राधाकर्णान्तनेत्रासौ श्रुत्वेत्यानन्दितो हरिः। अत्रेति श्रुत्वेति स्थिते क्रमः।

वाक्यमध्ये वाक्यप्रवेशे गर्भितं। यथा—यास्यत्येष शपे तुभ्यं वैराग्याद्बदरीवने। अत्र शपे तुभ्यमिति वाक्यं वाक्यान्तः प्रविष्टः।

पतत्प्रकर्षं यथा—प्रोद्दण्ड-भुजदण्डोऽसौ रामोऽहन् रावणं रणे। अत्रोत्तरत्रानुप्रासप्रकर्षः पतितः।

वाक्यान्तर-पदानां वाक्यान्तरप्रवेशे संकीर्णं यथा—चन्द्रं मुञ्च त्रिशालाक्षि मानं पश्य नभोंगणे। अत्र नभोंगणे चन्द्रं पश्य मानं मुञ्चेति युक्तं।

लुप्तविसर्गं यथा—गता निशा इमा बाले।

आहतविसर्गं यथा—नरो धीरो वरो गतः। अत्रोत्वं प्राप्ता विसर्गाः।

असिद्ध्यदिष्टसंबधमभवन्मतयोगं यथा—

या जय श्री मनोजस्य यया विश्वं विभूषितं।
यां पद्माक्षीं विना प्राणा वृथा मम कुतोऽद्य सा।

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां मिथो नैरपेक्ष्यात्तदंतस्थेन पद्माक्षी-शब्देन परेषां संबधो दुर्घटः। यां विनामी वृथा प्राणाः पद्माक्षी सेति पाठे तु सुघटः सः।

हतवृत्तं यथा—

इह मुरहरान्यत् किं भाव्यं भवत्पदसेवनात्।

अत्र हरिणी छन्दस्यस्मिन् षष्ठे वर्णे यति रुचिता। रसयुगहयैर्न्सौम्रौ-स्लौ गो यदा हरिणी तदेति तल्लक्षणात्। र इत्यत्र परपद-संधानकृता यतिरश्रव्यत्वेन भज्यते।

## अथार्थदोषानाह।

अपुष्टकष्टसंदिग्ध-व्याहताश्लील-दुष्क्रमाः।
प्रकाशितविरुद्धान्यसहचार्य्यनवीकृताः॥

साकांक्ष्य-ग्राम्य-निर्हेतु पुनरुक्ता स्तथापरे।
प्रसिद्ध्यादि-विरुद्धाद्या अर्था दुष्टाः प्रकीर्त्तिताः॥

अपुष्टादयोऽर्था दुष्टा इत्यर्थः।

तत्रापुष्टो यथा—चन्द्रो महति खे भाति लसंति त्रितता दिवः॥

अत्र महतीति विशेषणं विशेष्यभूतं खं न पुष्णाति॥

कष्टो यथा—योगिनो भिषजो ज्ञाश्च भवंत्याशयवेदिनः। अत्राशयशब्देन वासनादीनां बोधत्वात् कष्टता।

संदिग्धो यथा—नितम्बाः सुभ्रुवां सेव्याः किंवा क्षितिभृतामिह।

अत्र शान्तशृङ्गारिणोः को वक्तेत्यनिश्चयात् सन्देहः।

व्याहतो यथा—सीते न चन्द्रिका रम्या यथा त्वं नेत्र-चन्द्रिका।

अत्र यस्य रामस्य चन्द्रिका नानन्द-हेतुः स एव सीताया श्चन्द्रिकात्वमारोपयतीति व्याहतोऽर्थः।

अश्लीलो यथा—कुब्जेयं दुर्भगा यस्मात् कृष्णं रतिमयाचत।

अत्र भग-शब्देन गुह्याङ्ग-प्रतीते रश्लीलोऽर्थः।

दुष्क्रमो यथा—अश्वं मे देहि राजेन्द्र गजं वा मदसंकुलं।

अत्र पूर्वं हस्तिन्यभ्यर्थिते क्रमः। प्रकाशित-विरुद्धो यथा द्रष्टव्यः।

सखि देशोऽसौ चन्द्रो यत्र न दुःखदः। अत्र कान्तोन्यो यत्र लभ्यत इति विरुद्धं प्रकाश्यते।

अन्यसहचारो यथा—

वायसाः साधव स्तुल्या दृष्टाः स्वपरपुत्रयोः।

अत्र वायसानामपकर्षात् सहचर-भेदः॥

अनवीकृतो यथा—

सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः॥

एकभंगीनिर्दिष्टानेकार्थत्वमनवीकृतत्वं। महान्तो ह्यमितक्रमा इति तुर्य्यपादे सति नवीकृतत्वं स्यात्।

साकांक्षो यथा—मां जीवय वरारोहे। अत्राधरसुधयेत्याकांक्ष्यते।

ग्राम्यो यथा—तव भोगाय मत्तनुः। अत्र भक्षणप्रत्ययात् ग्राम्योऽर्थः।

निर्हेतु यथा—भुवि शेते नृपो नित्यं कुमारः परिधावति। अत्र प्रत्यहं भूशयने हेतुर्नोक्तः॥

पुनरुक्तो यथा—रामस्य प्रेयसी सीता सौन्दर्य्यादतिवल्लभा। अत्र वल्लभापदार्थः पुनरुक्तः।

प्रसिद्धिविरुद्धो यथा—

शितशूलधरो विष्णु श्चचार समरान्तरे॥

अत्र विष्णोश्चक्रधारणं प्रसिद्धं, तेन शूलधारणं विरुद्धं। आदिना विद्या विरुद्धो यथा—करजक्षतगण्डेयं विभाति पतिना सह। अत्र गण्डे नखक्षतं कामशास्त्रेण विरुद्धं।

आद्य-शब्दात् सनियमपरिवृत्तादयः। यथा—
देव त्वं मम वन्द्योऽसि। अत्र त्वमेवेति नियमो वाच्यः।

अनियम-परिवृत्तो यथा। चेतस्येव सदा स्फुर। अत्र चेतस्येवेति नियमो न वाच्यः।

## अथ रसदोषानाह।

रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणो स्तथा।
भावत्यागश्च नेतॄणां रसे दोषाः स्युरीदृशाः॥

क्रमेणोदा०—भग्नं दाशरथेश्चेतः शृङ्गारे विधुवीक्षणात्।

अत्र शृङ्गार-शब्दः। रामं दृष्ट्वा घनश्यामं जानक्या रतिरैधत। अत्र रति शब्दः। लज्जां दधार कांतेन चुम्बिता मदिरेक्षणा। अत्र लज्जा-शब्दः। वीररौद्रशृङ्गारशान्तप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीर-शान्ता श्चत्वारो नेतारस्तेषां स्वभावान् विहाय वर्णनं च दोषः। एवमनुभाव विभाव कष्टव्यक्त्यादयश्च दोषाः। लक्ष्याण्यूह्यानि। दोषान्तराणि चोक्तेषु॥

इति काव्यकौस्तुभे दोष-निर्णयः
षष्ठी प्रभा॥

---

# सप्तमी प्रभा।

एवं काव्यस्य गुणरीति-दूषणानि प्रदर्शितानि। अथास्योत्तमादि-भेदा-न्निरूपयति। तत्र रसादिर्व्यंग्यः काव्यस्यात्मा वस्त्वादिर्व्यंग्यस्तु तस्य प्राण इति यत्प्रागुक्तं तत्प्रदर्शयितुमुत्तम काव्यभेदान्प्रवर्त्तयति।

वाच्यातिचारुणि व्यंग्ये तत्काव्यं प्रोक्तमुत्तमं।

वाच्याद् व्यंग्येऽतिचमत्कारिणि सति तत् पूर्वोक्तं काव्यमुत्तमं। ध्वनि-रुत्तमकाव्यं स्यात्तथा व्यंग्यो रसादिकः। ध्वन्यतेऽस्मिन्ननेन वेति व्युत्पत्त्या तदुत्तमं काव्यं ध्वनिरुक्तः। ध्वन्यतेऽसाविति व्युत्पत्त्या तु रसादिर्व्यंग्योऽपि ध्वनिः। ध्वनेरुत्तमकाव्यस्य द्वौ भेदाविह विश्रुतौ।

एकः स्यादभिधामूलो लक्षणामूलकोऽपरः।

आद्यस्त्ववाध्यवाच्यः स्याद्वाध्यवाच्यः परः स्मृतः॥

आद्योऽभिधामूलो ध्वनिरवाध्यो वाच्यो यत्र तादृशः स्यात्। अत्र वाच्यः स्वं प्रकाशयन्नेव व्यंग्यं प्रकाशयति घटादिमिव दीपः। परस्तु लक्षणामूलः सतु वाध्यवाच्यः।

ध्वनेरवाध्यवाच्यस्य भवेद् भेदद्वयं पुनः।

असंलक्ष्यक्रमव्यंग्यो लक्ष्यव्यंग्यक्रम स्तथा॥

अभिधामूलो ध्वनि र्द्विविधः। एकोऽसंलक्ष्यक्रमव्यंग्यः, परस्तु लक्ष्यव्यंग्यक्रम इति। तयोरादिमं दर्शयति—

अर्थो यत्र भवेद् व्यंग्यो रसभावादिरक्रमः।

असंलक्ष्यक्रमव्यंग्यो ध्वनिः स विनिगद्यते॥

उक्तस्वरूपोऽसंलक्ष्यक्रमो रसादिरर्थो यत्र व्यंग्योभवेत् स ध्वनिरसंलक्ष्य-क्रमव्यंग्यः स्यात्। व्यंग्यप्रतीते विभावादि-हेतुकत्वाद्यद्यपि अस्ति क्रम स्तथाप्यसावुत्पलपत्रशतवेधवन्नसंलक्ष्यते, लाघवादतोऽसंलक्ष्यक्रमः सः।

उदा०—त्वं मुग्धाक्षीत्यादीनि।

पदवाक्य-प्रबन्धेषु पदांशरचनासु च।

वर्णेषु च भजत्येष सुव्यक्तत्वं रसध्वनिः॥

अथान्तिमं दर्शयति।

व्यंग्ये शब्दादि-शक्त्युत्थे सत्यनुस्वानसंनिभे।

शब्दार्थोभयशक्त्युत्थो लक्ष्यव्यंग्यक्रमो ध्वनिः॥

घण्टादौ हन्यमाने मुख्यशब्दानन्तरं यथाऽन्यः सूक्ष्मशब्दोऽनुध्वनिनामाभ्युदेति तद्वद्व्यंग्य श्चेत् क्रमलक्ष्यः स्यात्तर्हि ध्वनिलक्ष्यव्यंग्यक्रमाख्यो भवेत्। व्यंग्यस्य शब्दार्थोभयशक्त्युत्थत्वात् स ध्वनिस्त्रिभेदः शब्दशक्तिभूरर्थशक्तिभूरुभयशक्तिभूश्चेति।

तेषामाद्यमाह—वस्त्वलंकृतिरूपत्वाद्व्यंग्यस्याद्यो द्विधा मतः।

यत्र शब्दादेव वस्त्वलङ्कारौ व्यंग्यौ स्यातां, स शब्दशक्तिभूर्द्विभेदः। क्रमेणोदा—पुष्पमार्गण मनोरथोद्धतेत्यादि। अत्र त्वामतिसुन्दरं पश्यन्त्यहं स्मरेण पीड़िता यथाप्रसन्नचित्ता स्यां, तथा विधेहीति वस्तुशब्दादेव भासते।

कलाभिर्निभृत इत्यादि। अत्रोपमालंकारः शब्दादेव।

अथ द्वितीयः। वस्त्वलंकृति रूपोऽर्थो व्यञ्जकः संभवो स्वतः।

वक्तृप्रौढ़ोक्तिमात्राद्वा सिद्ध स्तेन चतुर्विधः॥
एकैको वस्त्वलंकारौ स यस्माद्व्यंजयत्यतः।
तद्गामी ध्वनिरेषः स्यादर्थशक्त्युद्भवोऽष्टधा॥

## अथ शक्तिभूर्ध्वनिरष्टविधः।

तथाहि अर्थोऽपि ध्वनौ व्यंजकः, स च स्वतःसंभवी लोकेऽपि दृष्टः तस्मिन्नदृष्टोऽपि वक्तुः प्रतिभामात्रात् सिद्धश्चेति। द्विविधोऽपि वस्त्वलंकाररूपत्वाच्चतुर्विधः सन्नेकैको वस्त्वलंकारौ यद्व्यंजयत्यतस्तद्व्यंजको ध्वनिरष्टविधः।

क्रमेणोदा॰—द्रौपद्याः कुलवध्वा दुःशासन-दुष्टवेष्टितादपि यः।
कुरुसंसदि गुरुपुरतो ररक्ष लज्जां स नो हरिः पायात्॥

अत्र निजभक्तलाघवं तिलमात्रमपि हरिर्न सहते इति वस्तु वस्तुना व्यज्यते।

मम क्षमस्वालि निजस्य दोषं
कृपाप्रपोषं कुरु देवि भद्रे।

वक्रालकाः कान्तमुखाब्जरुद्धाः
शोभां तवामी कलयन्तु कांचित् ॥

अत्र विपरीतरतिमाचरन्त्य स्तव क्षुद्रकुन्तला ललाटलग्नाः सन्तः पुल्लारविन्द-प्रसक्ता भृङ्गा इव भास्यंतीति वस्तुनोपमा ।

गंजनान्नहि बिभेषि गुरूणां खंजनाक्षि यमुनामधुनागाः ।
अंजनाभ इह कुंजर एकः कंजनालदलभंजनकारी ॥

अत्राधुनेत्यकांडेऽपि यद्गा स्तेन स्नातुं नागाः, किन्तु कृष्णांगसंगायैवेति काव्यलिंगालंकारस्तेन त्वं गुरूणां गंजनान्न बिभेषीति, तस्मात्तव न भयमपि तु तत्सङ्गविरहादेवेति वस्तु। एवं कुंजर इति कृष्णाख्यापह्नवादपह्नुति रलंकारस्तेन कृष्णकुंजरयोरुपमा चेति। एषु चतुर्विधोऽर्थः स्वतः संभवी ।

चलन्ति चरणादीनि भानव्या यदि भावतः ।
पतन्ति पृथुला स्तर्हि सौन्दर्यामृत-विन्दवः ॥

अत्र स्वाभाविकात्पदादि-स्पन्दनादेवं माधुर्यवृष्टि रतो लोकोत्तरेयमिति वस्तुना रासलास्यविधौ वा कीदृक् तद्वृष्टिरिति वस्तु ।

निजं मुखमनाच्छाद्य लीलाकमलकोरकं ।
राधे किमु करांगुल्या विकाशयितुमीहसे ॥

अत्र वस्तुना रूपकं। त्वन्मुखं चन्द्रात्मकमिति ।

गाढ़मालिंगितुं कान्ते पर्य्यन्तमुपसर्पति ।
निर्यांति हृदयान्मानस्तन्व्याः पीडनभीरिव ॥

अत्रोत्प्रेक्षया प्रत्यालिंगनादि दानं वस्तु ।

किं वर्णये तव गोविन्द सेयं शारद्-चन्द्रिका ।
यत्कीर्त्ति भामिनी-भाले कस्तूरीतिलकीयति ।

अत्र त्वत्कीर्त्तौ सत्यां किमर्थमियं कौमुदीति प्रतीपमुपमया। एषु व्यंजकोऽर्थो वक्तुः प्रतिभया निर्मितः तदेवमष्टधा ॥

एक एव द्विशक्त्युत्थो

व्यंग्ये द्युत्थे सति ध्वनेरेक एव भेदः।

यथा—निःशेष-तापसंहर्त्ता जगज्जीवनदायकः।

मुदिरो मुरवैरी च न भवेत्कस्य वल्लभः॥

अत्र शब्दार्थयोः शक्त्या घनकृष्णयोरुपमा व्यज्यते। तदेवमभिधामूलो ध्वनि र्द्वादशविधः प्रोक्तः। विवक्षितान्यपरवाच्योयमुच्यते।

## अथ लक्षणामूलो दृश्यते।

अर्थान्तरोपसंक्रान्तः सर्वथा च तिरस्कृतः।

वाच्यः स्याद्वाध्यवाच्यस्य तेनासौ द्विविधः स्मृतः॥

वाध्यवाच्यो ध्वनि र्द्विविधः। अर्थान्तरोपसंक्रांतवाच्योत्यन्ततिरस्कृत वाच्यश्चेति। यत्र वाच्योऽर्थः स्वयमनुपयुक्तः स्वविशेषरूपेऽर्थान्तरे परिणमते स प्रथमः। यत्र त्वत्यन्तानुपपन्नः सन् स्वविपरीते नार्थान्तरेण परिणमते सद्वितीयः। क्रमेणोदा०—

तस्यैव वाणी वाणी स्यात्कृष्णं यः परिकीर्त्तयेत्।

अत्र द्वितीयो वाणीशब्दः पुनरुक्तिभयात् साधारणवाणीरूपेर्थे वाधितः सन् साफल्यादिगुणविशिष्टं वाणी-रूपमर्थं बोधयति। व्रजपतिमतिसुन्दरांगमित्यादि॥ अत्र भगवद्दर्शननिषेधरूपो वाच्योर्थोऽनुपपन्नः सन् स्वविपरीत-तद्विधि-रूपतया पर्य्यवस्यतीति द्वेधा वाध्यवाच्यः। अयमविवक्षितवाच्यः कथ्यते शुद्धसंकर-संसृष्टि-भेदाद्बहुविधोऽप्ययं। पदवाक्य-प्रबन्धादि-गतत्वेनापि तादृशः। तदेवमसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्निरूपणेनेह काव्यात्मा रसादि-व्यंग्यो दर्शितः। लक्ष्यव्यंग्यक्रमादेर्ध्वनेर्निरूपणेन तु काव्यप्राणोवस्त्वादिव्यंग्यो निर्दिष्टं।

इति काव्यकौस्तुभे ध्वनिभेदनिर्णयः सप्तमी प्रभा॥

---

# अष्टमी प्रभा ।

## अथ मध्यमकाव्यमाह ।

वाच्यादचमत्कारिणि काव्यं मध्यममुदीर्य्यते ।

व्यंग्ये वाच्यादचारुणि सति तत्पूर्वोक्तं काव्यं मध्यममुच्यते । तच्चासुन्दरमस्फुटमगूढमितरांगं वाच्यसिद्ध्यंगं । तच्च व्यंगं ।

तत्रासुन्दरं यथा—

आगतो निशि मदीयमन्दिरं कुन्ददन्ति किल कोऽपि तस्करः ।
निद्रिता न्यपजहार चक्षुषो पूरयन्मम स नीलकान्तिभिः ।

अत्र कृष्णानुरागादनिद्राहमिति व्यंग्यं, तच्च वाच्यापेक्षया न चारू ।

अस्फुटं यथा—

देव्यः संवीक्ष्य गोविन्दं धृतचक्रं कुतूहलात् ।
परिष्कुर्वन्ति गात्राणि वासोऽलङ्कार-चन्दनैः ॥

अत्र भगवच्चक्रेण निहता वीराः पतयो नः स्युरिति तान् वरीतुं ताः स्वगात्राणि मण्डयन्तीति व्यंग्यमस्फुटं ।

अगूढं यथा—

उत्कीर्णानीत्यादि । अत्र पिवन्तीति सादरावलोको लक्ष्य स्तस्य गाढासक्ति व्यंङ्गा, सा च वाच्यवत् प्रकाशादगूढैव ।

इतरांगं यथा—

कान्तश्रवोंते स्वनतेत्युदीर्य्य पादांगुलीयानि पदांगुलीषु ।
समर्पयन्तीं सुमुखी वयस्यां लीलाम्बुजेन प्रजहार तन्वी ॥

अत्र हास्यस्य शृङ्गारांगं ।

वाच्यसिद्धाङ्गं यथा—

निषोदाच्युत गच्छामि किमत्र तव वीक्षया ।
इत्यामंत्रण-भावज्ञः सस्वजे युवतिं हरिः ॥

अत्राच्युतेत्यादि-पदव्यंग्यमामंत्रणेत्यादिवाच्यसिद्धे रङ्गं तदुपपादकात्वात् । एव मन्येऽपि भेदा बोध्याः ॥

इति काव्यकौस्तुभे मध्यमकाव्यनिर्णयो ऽष्टमी प्रभा ॥

---

# नवमी प्रभा ।

## अथ कनिष्टकाव्यमाह ।

अव्यंग्यं तु कनिष्टं स्यात्काव्यं शब्दार्थ-विचित्रं ।

स्फुटव्यंग्यरहितं काव्यं कनिष्ठं । तच्च शब्दालङ्कारयोगाच्छब्दचित्रं । अर्थालंकारयोगात्त्वर्थचित्रमिति द्विविधं ।

## अथालंकाराणां लक्षणं ।

शब्दार्थवर्त्तिनः संतं रसमुत्कर्षयन्ति ये ।
तेऽलंकारा यथात्मानं देहस्थाः कंकणादयः ॥

यथा कुण्डलादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्व्वन्ति, तथानुप्रासोपमादयः शब्दार्थ-शोभातिशायिनः संभविनं रसमुपकुर्वन्तीत्यलंकारास्ते । तेषु शब्दालंकारानाह ।

वर्णसाम्यमनुप्रासः पूर्वसंस्कार-बोधकृत् ।

असंयुक्तसंयुक्तरूपस्यानेकस्य व्यंजनस्य सकृत्साम्यं छेकानुप्रासः,

असंयुक्त-संयुक्तरूपस्यानेकस्य च व्यंजनस्यासकृत्साम्यं वृत्त्यनुप्रासः क्रमेणोदा०—

जहार हरिणाक्षीयं कुन्देन्दु-मधुरैः स्मितैः।
कुण्डलोज्ज्वलगंडश्री हृदयं विदयं मम॥

कुमार कचभारस्ते सारः संप्रति चेतसि।
विभग्नशरवन्मग्नो लग्नोऽप्येतत् किमद्भुतं॥

शब्दसाम्यं च सः प्रोक्तो भेदे तात्पर्य्यमात्रतः।
शब्दानां शब्दस्य च साम्यं लाटानुप्रासः॥

शब्दार्थयोरभेदेऽपि तात्पर्य्यमात्राद्भेदे सतीति यमकाद्भेदः, क्रमेणोदा०—

नार्चितो येन गोविन्द स्तस्य तीर्थाटनेन किं।
अर्चितो येन गोविन्द स्तस्य तीर्थाटनेन किं॥

अत्र भगवद्विमुखस्य तीर्थाटनादपि न किञ्चित्फलं, तत्संमुखस्य तु तेन विनापि तत्फलमस्तीति तात्पर्य्यं भिद्यते।

तारुण्योल्लसिते पुंसि तरुणी वत शर्करा।
शर्करा क नु माधुर्य्यमीदृशं भजतेतरां॥

इह प्रथमं शर्करापदं विधेयपरं, द्वितीयं त्वनुवादपरं।

भिन्नार्था संभवत्यर्थे स्वरव्यंजन-संहतिः।
क्रमेण तेन चेद्भच्छेदावृत्तिं यमकं तदा॥

यद्यर्थः संभवेत्तदा द्वौ वर्णसंघौ भिन्नार्थकौ, यदि न संभवेत्तदा द्वावपि व्यर्थौ। एकतरार्थवत्त्वे तु सार्थव्यर्थौ चेति भूरिभेदं यमकं।

उदा०—सुरसार्थ-भूषितपदै ब्रह्मादिभिरधिकभक्तिसंनम्रैः।
सुरसार्थ-भूषितपदैः स्तवैः स्तुतः केशिहा जयति॥

अत्र द्वौ सार्थौ।

कुसुमराजिविराजिविभूषणेत्यादौ तु द्वावपि व्यर्थौ॥

आयाता शरदाहो शरदाहो मान्मथः प्रखरः।
सरति सरः कलहंसी कलहं सोमंतिनी त्यजति॥

अत्र सार्थौ च सार्थव्यर्थौ चेति ॥२॥

पौनरुक्त्यावभास स्त्वे दर्थस्यापाततो भवेत्।
पुनरुक्तवदाभास स्तदा स्याद्भिन्नशब्दगः॥

विभिन्नाकार-सभंगाभंग-शब्दनिष्ठः सः। उदा॰—

अवलास्त्रीरिपुः कृष्णाद् बुधात्सौम्यान्न शंकते ॥ ३ ॥

श्लेषो यदि पदैः श्लिष्टै रनेकोऽर्थोऽभिधीयते।
वर्णादिश्लेषणादेष तदभावाच्च संभवेत्॥

यथा—विधौ विरुद्धे हरितः प्रसादं नोपभुंजते॥ अत्र विधावित्युकारेकारयोः श्लेषणं। हरित इति विभक्त्योः।

दयितासि ममेत्यासीत्सीता-राघवयोर्वचः॥ अत्र दयितेति प्रत्यययोः।

वृद्धिं ते दधते बुद्धिं विधुमोदा यथाऽध्ययः॥ अत्र दधत इति प्रकृत्योर्वचनयोश्च। विधुमोदा इति लिङ्गयोश्च।

चमूरु वसति भाति मथुरैषा यथाटवी॥ अत्र चमूर्विति पदयोः।
वर्णादिश्लेषणाभावेऽपि यथा—

भूभृन्नितम्ब-संसर्गान्महिषी मुदिता बभौ॥

अत्र प्रकरणादिभिरभिधानियमनाभावादर्थद्वयं वाच्यं। तत्रैको ऽभिधया बोध्यः, परस्तु तत्सदृशया निरूढलक्षणयेति। एष शब्दश्लेषः सभङ्गाभङ्गतया द्विविधः प्रागुक्तलक्ष्येष्ववगन्तव्यः। नन्वभङ्गोऽर्थश्लेषः स्यादर्थयोस्तत्र श्लेषणात्। मैवं, अर्थभेदे शब्दभेदस्वीकारात्। तस्माद्यत्र शब्दपरिवृत्तौ श्लेषत्वं भज्यते स शब्दश्लेषः। यथा विधावित्यादिकः। यत्र तन्न भज्यते स त्वर्थश्लेषः॥ यथा—सन्तापहर्त्ता हरि रम्बुदश्चेति ॥४॥

हाराद्याकारहेतुत्वे वर्णानां चित्रमुच्यते।

हारबन्धो यथा—कुरु तरुणि रुषं नोपताप-प्रपन्ने
भज निजविजनं तारहारस्फुरन्ती।
स्तनकनकनगौ शातपातप्रतप्तां
तनुमनु तनुतां भावशाबल्यवत्ताम्॥

खड्गबन्धो यथा—
वीणावाणी सुन्दरीवृन्दमुख्या ख्याता सद्भिर्लक्षणैः कुंजदेवी।
वीक्षांचक्रे माधवं भावसारा रासोल्लासात्काऽपि तं फुल्लनीवी॥

कपाटबन्धो यथा—
स्मराघनाशि भास्वरं जराभरातिसादनं।
मुरारिनाम भावरं परावरात्म-साधनं॥

एष गोमूत्रिकाश्वगतिश्च।

चक्रबन्धो यथा—गन्धाकृष्टगुरून्मदालिनि वने हारप्रभातिप्लुतं
संपुष्यान्तमुपस्कृताध्वनि यमीवीचिश्रियो रंजकं।
सद्यस्तुंगितविभ्रमं सुनिभृते शीतानिलैः सौख्यदे
देवं नागभुजं सदा रसमयं तं नौमि कंचिन्मुदे॥

स्तव्यकवि-नामगर्भं चक्रं।

पद्मबन्धो यथा—कलवाक्य सदालोक कलोदार मिलावक।
कवलाद्याद्भुतानूक कनुताभोरवालक॥ ५॥

वक्रोक्तिः श्लेषकाकुभ्यामन्योऽर्थो यदि कल्प्यते॥

क्रमेणोदा०—राधे त्वं कुपिता त्वमेव कुपिता रुष्टासि भूमे यतो
माता त्वं जगतां त्वमेव जगतां माता न विज्ञोऽपरः।
देवि त्वं परिहास-केलिकलहेऽनंता त्वमेवेत्यसौ
स्मेरो वल्लवसुन्दरीमवनमन् शौरिः श्रियं वः क्रियात्॥

अत्र कुपितेति सभंगेन श्लेषेण मातेति त्वभंगेन॥

यथा वा—भवित्री रंभोरु त्रिदशवदनग्लानिरधुना
स ते रामः स्थाता न युधि पुरतो लक्ष्मणसखः।

इयं यास्यत्युच्चैर्विपदमधुना वानरचमू
र्लघिष्ठेदं षष्ठाक्षरपरविलोपात् पठ पुनः॥

अतसीकुसुमश्यामं शतसीमन्तिनी-वृतं।
सतृष्णं कृष्णमालोक्य हृदयं न विदूयते॥

अत्रैकया निषेधेऽर्थे प्रयुक्तो नञ् परया तु विधौ घटितः॥ ६॥

भाषाणां श्लेषणं यत्र तद्भाषासमकं मतं॥

एकविधैः शब्दैर्विविधा भाषा यदि निबध्यन्ते, तदा भाषासमकं नाम।

उदा॰—मञ्जुलमणिमंजिरे कलगभीरे विहार-सरसीतीरे।
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे॥

अत्र संस्कृतप्राकृत-शौरसेनी-प्राच्यवन्त्यादिभिरेकविधः श्लेषः॥ ७॥

च्यातयित्वाक्षरं किंचिद्दत्वा चान्यत् प्रकाश्यते।
अन्योऽर्थो यत्र तत् प्राहुश्च्युतदत्ताक्षरं बुधाः॥

यथा—कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम्।
किं करोतु कुरंगाक्षी वदनेन निपीडिता॥

अत्र रसाल इति वक्तव्ये साल इति रश्च्युतः। वन इत्यत्र यौवन इति यौर्दत्तः। वदनेति मे च्युते वश्च॥ यथा वा—

पूर्णचन्द्रमुखी रम्या यामिनी निर्मलाम्बरा।
करोति कस्य न स्वांतमेकान्तमदनोत्तरं॥

अत्र ये च्युते के दत्ते कामिनीति॥ ८॥

अन्योर्थो विस्फुटं यत्र बिन्द्वादि-प्रच्युतावपि।
प्रतीयते विदः प्राहुस्तद्बिन्दुच्युतकादिकं॥

यथा—सुन्दरि बिन्दुच्युतके तव नैपुण्यं बभूव पुण्येन।

शशिमुखि वशीकृताऽभूद्वंशी मम यत्त्वया त्वरया॥

अत्र त्वदधीना मे वंशीति स्फुटमपरोऽर्थः॥

मन्द्रैः कलापिनामेते पक्षिणां धरणीरुहाः।
विरुतैः स्वागतानीव वारिवाहाय तन्वते॥

इह मन्द्रैरिति विसर्गे च्युते मन्द्रैकलापिनामिति। एवं वर्णाच्युतकादिकमूह्यं॥ ६॥

न लक्ष्यते स्फुटं यत्र पदसन्धान-कौशलात्।
क्रियादि सदपि प्राज्ञैः क्रियागुप्तादि तत् स्मृतं॥

यथा—पाण्डवानां सभामध्ये दुर्योधन उपागतः।
तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च॥

अत्रादुरिति क्रियाया गुप्तिः॥

वटवृक्षो महानेष मार्गमाक्रम्य तिष्ठति।
तावत्त्वया न गन्तव्यं यावन्नान्यत्र गच्छति॥

हे वटो एष महानृक्ष इति सन्धि-संबोधनयोः।

माधवस्य पुरोऽप्यासां साध्वीनां व्रजसुभ्रुवां।
राजते वदने तन्वी नापि स्वप्रियचेतसां॥

अत्र मेति कर्त्तुः।

साकं सखीभिरागत्य काननेऽस्मिन् दिने दिने।
उत्काप्युत्काय मे राति राधा वामतया बत॥

अत्राकमिति कर्मणः।

पूतिपंकमयेत्यर्थं कासारे दुःखिता अमी।
दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे॥

अत्र दुर्वारेति करणस्य। एवं सम्प्रदानादेरूह्या॥ १०॥

एते शब्दालङ्काराः॥

---

## अथार्थालङ्काराः।

उपमा तूभयोः साम्यं वाच्यं वाक्यैकगं भवेत्।

द्वयोः सादृश्यमुपमा भवेत्। तत्सादृश्यं यदि वाच्यमेकवाक्यगतं च स्यात्। रूपकादौ सादृश्यं व्यंग्यं। अनन्वये एकस्यैव सादृश्यं। उपमेयोपमायां वाक्यद्वयमतस्ताभ्योस्या भेदः। तां विभजति—

पूर्णा चेदुपमेयादि-चतुष्कं शाब्दमोच्यते॥

उपमेयं मुखादि उपमानं पद्मादि साधर्म्यं गुण-क्रियाकृतं माधुर्य्यविकाशादि क्वचिच्छब्दमात्रकृतं च। तद्वाचकस्तु यथेवादिः। एषु चतुर्षु शब्दोपात्तेषु पूर्णोपमोच्यते।

श्रौतो यथादिभि र्योगादिवार्थवतिना च सा।
आर्थी समादिभिर्योगात्तुल्यार्थवतिना तथा॥

यथेववेवार्थवतयो यत्र श्रुता एव साधर्म्यं बोधयन्ति सा श्रौती। समतुल्य सदृशादितुल्यार्थवतिभि र्यत्रार्थात् साधर्म्यस्य बोधः सा त्वार्थी।

द्वेधा वाक्ये समासे च तद्धिते चेति षड्विधा।

वाक्यगा समासगा तद्धितगा च श्रौती तथार्थी चेति षोढ़ा पूर्णोपमा। क्रमेणोदा०—

वचोमृतं यथा स्वादु कुंभाविव कुचौ पृथू।
गन्धश्चन्दनवन्मोदी तव किं बहु वर्णये॥

अत्र क्रमेण श्रौतीत्रयं। कुम्भाविवेति समासः। चन्दनवदिति षष्ठ्यन्तादिवार्थे वतिः।

अब्जेनास्यं समं फुल्लं कुन्दाभं स्मितमुज्ज्वलं।
देव पीयूषवत्तस्या मोदनोऽधरपल्लवः।

अत्र क्रमेणार्थीत्रयं, पीयूषवदिति तुल्यार्थे वतिः।

वाला प्रकटितटीका संहतिरिव पाणिनीय-सूत्राणां।
चेतोवृत्तिरिवासौ निरुपम-जंघालता विभाति पुरः॥

अत्र शब्दमात्रसाम्ये श्रौतीयं श्लेषोपमेत्युच्यते।

अथ लुप्ता—

लुप्ताष्टधोपमेयादेरेकद्वित्रयग्रहाद्भवेत्।

उपमेयादीनां चतुर्णां मध्ये एकस्य द्वयो स्त्रयाणां वा वाचकेऽगृहीते लुप्तोपमा। सा च वाचकलुप्ता धर्मलुप्ता धर्मवाचकलुप्ता वाचकोपमेयलुप्ता उपमानलुप्ता वाचकोपमानलुप्ता धर्मोपमानलुप्ता धर्मोपमेयवाचकलुप्ता चेत्यष्टधा। यथा—

अभ्रश्यामोऽब्जतुल्यास्यो विधूयन्हृदये मम।
दृष्टः कृष्णातटे कृष्णो भक्तानां कल्पपादपः॥

अत्राभ्रश्याम इति वाचकस्यैव शब्दस्य लोपः। अब्जतुल्यास्य इति धर्मलोपः। कल्पपादप इति धर्मवाचकलोपः। विधूयन्निति वाचकोपमेयलोपः। आत्मानं विधुमिवाचरन्नित्यात्मन उपमेयस्य सहोपमावाचकेन लोपात्। "यत्पादाभ्यां समं क्वापि मनोज्ञं नैव वीक्ष्यते। एष चित्तहरः कृष्णो भाग्येनैवोपलभ्यते। पूर्वार्द्धे उपमानस्य लोपः। परार्द्धे तु वाचकोपमानयोः॥

नास्ति यत्सदृशं क्वापि नापि तुल्यं यदाख्यया।
हरिणीनयना राधा तमाधावति केशवं॥

अत्र पूर्वार्द्धे धर्मोपमानयो र्लोपः। परार्द्धे तु धर्मोपमेय-वाचकानां।
हरिण्या नयने इव मनोज्ञे नयने यस्याः सेति।

मालोपमा यदेकस्योपमानं भूरि बोद्ध्यते॥ यथा—

कुमुद्वतीव शीतांशोः केतकीव मनोभुवः।
नलिनीव रवेरासीन्मनोज्ञा राधिका हरेः॥

यथोर्द्धमुपमेयस्योपमानत्व-प्रकल्पनं।
यत्र स्यात्तां रसाभिज्ञा वदन्ति रसनोपमां॥

यथा— चन्द्रायते शुक्लरुचापि हंसो
हंसायते चारुगतेन कान्ता।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः॥ १॥

एकस्यैवोपमेयत्वोपमानत्वमनन्वयः।

एकवाक्यगतमिति शेषः। यथा—

सिन्धुः सिन्धुरिव ज्यायानिन्दुरिन्दुरिवोज्ज्वलः॥ २॥

पर्य्यायेण द्वयोस्तच्चेदुपमेयोपमोच्यते।

तदुपमेयत्वमुपमानत्वं च यद्युभयोः क्रमेण स्याद्वाक्यगाभ्यां तदोपमेयोपमा। यथा—

श्रीरिव श्रीश वाणी ते वाणीव श्री र्मनोरमा॥ ३॥

प्रतिवस्तूपमैकस्मिन्साधर्म्ये वाक्ययोः स्थिते॥ यथा—

राधया माधवो भाति माधवेनैव राधिका।
रजन्या राजते चन्द्रश्चन्द्रेणेह रजन्यपि। अत्रोभयत्र दीप्तिरूपो धर्मः शब्दभेदेनोपात्तः। वैधर्म्येण चेयं दृश्यते॥

चकोर्य्य एव चतुरा श्चन्द्रिकाचामकर्मणि।
विनावंतो न निपुणाः सुदृशो रतनर्मणि॥

मालारूपा यथा—

विमल एव रविर्विशदः शशी प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः॥ ४॥

दृष्टान्तो यत्सधर्मस्य वस्तुनः प्रतिबिम्बनं।
सधर्मस्येति पूर्वतोऽस्य भेदः। यथा—

जनः कृष्णपदध्यायी विषयान्नाभिवांछति।
आकन्दमुकुलास्वादी निम्बकान्नात्ति कोकिलः॥

वैधर्म्ये यथा—

त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदन-व्यथा।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुद-संहतेः॥

प्रतिवस्तूपमायामेकस्य साधर्म्यस्य द्विरुक्तिः। दृष्टान्ते सर्वेषां धर्माणां प्रतिबिम्बवदवभासः॥ अर्थान्तरन्यासे तु समर्थ्यसमर्थकवाक्ययोः सामान्य-विशेषभाव इत्येषामसांकर्य्यं॥ ५॥

बोध्यः सोऽर्थान्तरन्यासो यत्सामान्यविशेषयोः।
हेतुहेतुमतोश्चापि तदन्येन समर्थनं।

सामान्यस्य विशेषेण समर्थनं, विशेषस्य च सामान्येन। हेतो र्हेतुमता समर्थनं, हेतुमतश्च हेतुनेति चतुर्विधोऽर्थान्तरन्यासः। समर्थनस्य साधर्म्यवैधर्म्याभ्यां दृष्टत्वादष्टविधतां भजति।

क्रमेणोदा०—बृहत्सहायः कार्य्यांतं क्षोदीयानपि गच्छति।
संभूयाम्भोधिमभ्येति महानद्या नगापगा॥

अत्र विशेषेण सामान्यस्य समर्थनं।

चिन्तयन्नागतः कृष्णं गान्दिनीनन्दनो यथा ।
तथैव सत्कृतस्तेन सफला हि सतां कृतिः ॥

अत्र सामान्येन विशेषस्य ।

सहसा विदधीत न क्रियामविवेकः परमापदां पदं ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥

अत्र संपत्करणेन कार्येण सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य हेतोः समर्थनं ॥

पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं
कूर्मराज तदिदं द्वितयं दधीथाः ।
दिक्‌कुंजराः कुरुत तन्तृतये दिधीर्षां
रामः करोति हरकार्मुकमाततज्यम् ॥

अत्र हरकार्मुकात्तसज्जीकरणेन हेतुना पृथ्वीस्थैर्यादेः कार्य्यस्य समर्थं । एतानि साधर्म्योदाहरणानि वैधर्म्यें यथा—

हरिविमुखस्य ममैते प्राणा नियान्तु गान्दिनेयस्य ।
तत्पदपंकजमधुपा ये स्युर्जीवन्तु ते ध्रुवं जगति ।

अत्र सामान्येन विशेषस्य समर्थनं ॥

गुणानामेव दौरात्म्याद्धुरि धुर्य्यो नियुज्यते ।
असंजात-किणस्कन्धः सुखं स्वपिति गौर्गडिः ।

अत्र विशेषेण सामान्यस्य ; एवमन्यदूह्यं ॥ ६ ॥

उपमेयस्योपमानाद्यद्याधिक्यं निबध्यते ।
व्यतिरेक स्तदा बोध्यो व्यत्ययादप्यसौ भवेत् ॥

क्वचिदुपमानादुपमेयस्याधिक्यं क्वचित्तूपमेयादुपमानस्य तत् ।
क्रमेणादा०—पल्लवितः कल्पतरोरेष विशेषः करस्य ते वीर ।
भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥

रक्तस्त्वं नवपल्लवै रहमपि श्लाघ्यैः प्रियायाः गुणै
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे मामपि।
कान्तापादतलाहति स्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्य मशोक केवलमहं धात्रा सशोकः कृतः॥

श्लेषविच्छित्तिकोऽयं व्यतिरेकः। शुद्धो यथा—

तत्तद्गुणै रगाधाः सन्ति न का धामनि स्त्रियोऽस्य हरेः।
आधारः खलु राधा नियतमसाधारणप्रेम्णः॥ ७॥

अप्रस्तुतप्रशंसा तु सा चेत् प्रस्तुतमाश्रयेत्।

अप्राकरणिकस्य प्रस्तावश्चेत् प्राकरणिकमाक्षिपति तदाऽप्रस्तुतप्रशंसालंकारः। तद्भेदानाह—कार्य्यकारण-सामान्य-विशेष-सदृशेषु हि।

स्यात्प्रस्तुतेषु हेत्वादेः सदृशस्य च शंसनं॥

तदेवं पंचधा—क्रमेणोदा०—

आश्लिष्य क्व गतः कान्तो न जाने सखि संप्रति॥

अत्र दुःखिता किमित्युपलक्ष्यसे इति कार्ये प्रस्तुते तद्धेतोः कान्तविच्छेदस्य प्रस्तावः॥ १॥

यात्यस्तं पुष्णि कुर्वन्ति वेशान्कृष्ण व्रजाङ्गनाः।

अत्र कृष्णान्तिकागमने हेतौ प्रस्तुते तत्कार्य्यस्य वेशरचनस्य॥ २॥

गहनां कुहनां छेत्तुं रामनामानि कीर्त्तय।

अत्राविद्या-विनाशकतया भक्ति-सामान्ये प्रस्तुते नामकीर्त्तनस्य भक्तिविशेषस्य॥ ३॥

प्रसाद्य वनिता नाथ कमनीयातियत्नतः।

अत्र स्वसखीरूपे विशेषे प्रस्तुते नायिकासामान्यस्य॥ ४॥

कनकाचितमूलोऽयं तमालः किल दीव्यति।

अत्र पीतवाससि कृष्णे प्रस्तुते तत्तुल्यस्य स्वर्णनिबद्धमूलस्य तमालस्येति पंचधा॥ ५। ८॥

प्रस्तुतात्प्रस्तुते व्यक्ते कथ्यते प्रस्तुतांकुरः ॥

यत्र प्रस्तुतेन वर्ण्यमाणेनान्यदभिमतं प्रस्तुतं व्यज्यते स प्रस्तुतांकुरो नाम ॥ उदा०—

कोशद्वन्द्वमियं दधाति नलिनी कादम्ब-चञ्चुक्षतं
धत्ते चूतलता नवं किसलयं पुंस्कोकिलास्वादितं ।
इत्याकर्ण्य मिथः सखीजनवचः सा दीर्घिकायास्तटे
चेलान्तेन तिरोदधे स्तनतटं बिम्बाधरं पाणिना ॥

अत्र वाच्यार्थः प्रस्तुतः। इयमिति नलिनी, व्यक्तिविशेषनिर्देशात् दीर्घिकायास्तट इत्युक्तेश्च ॥ ९ ॥

विशेषः किञ्चिदारम्भात्कार्य्यं यद्दुष्करं भवेत् ।
आधेयं यदनाधारं यच्चैकं बहुवृत्तिमत् ॥

एकं कार्य्यं कुर्वतो यदि तेनैव व्यापारेण दुःशकमन्यत्कार्य्यं सिध्येत्, यदि प्रसिद्धमाधारं विनैवाधेयं तिष्ठेत्यदि चैकमेकरूप्येण युगपदनेकत्र वृत्तिमत्स्यात्तदा त्रिविधो विशेषः। क्रमेणोदा०—

विधिना विदधे राधा सारमादाय सर्वतः।
विधुचन्द्रारबिन्दादि तच्छेषेणैव निर्ममे ॥

परलोकं गतस्यापि यस्य कुन्देन्दु-सुन्दरं ।
जगद् व्याप्य यशो भाति स जीवति न संशयः ॥

अस्ति सा पुरतः पृष्ठे पार्श्वे वाचि मनस्यपि ।
कामः केनाध्वना मम प्रविश्य प्रतुदत्ययं ॥ १० ॥

विषमः स स्मृतो या स्याद् घटनाननुरूपयोः।
इष्टार्थोद्योगतो यत् स्यादनिष्टस्यैव लम्भनं ॥

कार्य्यं यच्च विरूपं स्याद्वैरूप्याद्गुणकर्मणोः।
क्रमेणोदा०—क्व वज्रसारश्चाणूरः क्व कृष्णः कुसुमप्रभः ॥

अत्राति कर्कशत्वेनातिमृदुत्वेन च विरूपयोश्चाणूर-कृष्णयो र्घटना ॥
अयं दुग्धसिन्धोः पति र्गोकुलेशो हरि र्भूरि दुग्धं प्रदातेति लोभात्।
भजन्तोऽन्वहन्तेन तु च्यावितशाः स्वकान्मातृदुग्धाद्वयं वारिताः स्म ॥

तमालश्यामलोऽप्येष तवासिरसुरान्तक।
आसज्य परसेनायां तनोति विशदं यशः।

अत्र श्यामरूपं कारणगुणस्तद्वैरूप्यं शौक्ल्यं कार्ये।

जातः सखि मनोजस्ते नेत्रेणानन्ददायिना।
तापं तनोति कृष्णस्य तन्वि चित्रमिदं महत्।

अत्र कारणनिष्ठा क्रियानन्दः तया विरूपा तापक्रिया कार्ये ॥ ११ ॥

तद्गुणः स्वगुणं हित्वा यद्यन्यगुणमाश्रयेत् ॥

यथा—अधरांजनयोः कान्त्या सुतनोरुपरंजिताः।
पश्य गुंजाफलायन्ते मुक्ता नासावलंबिनाः ॥ १२ ॥

संगतान्यगुणानंगीकारस्तु स्यादतद्गुणः ॥

यथा—क्षीराब्धेरुद्राज्जातः कालकूटस्य सोदरः।
तथापि रक्त एवैकः कौस्तुभो न सितासितः ॥ १३ ॥

पूर्वख्यातगुणोत्कर्षोऽनुगुणः कारणान्तरैः ॥

यथा—मर्कटो मदिरामत्तो वृश्चिकेनापि दंशितः।
ग्रस्तश्चैष पिशाचेन कुरुते गुरु चापलं ॥

अत्र स्वाभाविकस्य कपिचापलस्य मद्यादिभिरुत्कर्षः ॥ १४ ॥ अनुगुणः ।

प्रत्यनीकं बलिष्ठस्य रिपोः पक्षे पराक्रमः ॥

यथा—मध्येन तनुमध्या मे मध्यं जितवतीत्ययं।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः ॥ १५ ॥

उत्कृष्टं वस्तु यत्तस्योपमानत्वं प्रकल्प्यते।
प्रख्यातस्योपमेयत्वमुपमानस्य यद्भवेत् ॥

निष्फलत्ववचो यच्च तत् प्रतीपं त्रिधा स्मृतं ॥

क्रमेणोदा०—

अहमेव गुरुः सुदारुणानामिति हालाहलतातमास्य दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानां।

अत्र परमदारुणत्वेन हालाहलमुत्कृष्य दुर्जनवचनस्योपमानं तत्कल्पितं।

विवेक-विधुरः प्रेयान् यत्तेनाप्युपमीयते।
कृशोदरि तवानेन मुखेन मृगलांछनः।

विधाय वेधा वदनं मृगाद्या निरीक्ष्य चन्द्रं क्षयिणं जडं च।
अशुद्धतां तस्य वदन्स विज्ञः कलङ्कमस्या कलयांचकार ॥

एतस्मिन्वदने सति निष्फलोऽयं विधुरिति तत्राङ्कमसीक्षेपः ॥ १६ ॥

भवेत्सम्भावनोत्प्रेक्षा त्रिधा वस्त्वादि-भावतः।

वस्तुनो वस्त्वन्तरभाविनाहेतो हेतुभाविन।

फलस्य फलभाविन च सम्भावना त्रिविधोत्प्रेक्षा ॥

उत्कटतया प्रकृष्टस्योपमानस्येक्षा प्रतीतिरिति योगादुत्कटोपमानकोटिकः संशयः सेत्यर्थः ॥

क्रमेणोदा०—जृम्भानुबन्धविकसद्वदनोदराणां
चन्द्रः करेण कृपयेव कुमुद्वतीनां।
नर्वाप्य गाढ़विरहानलमुज्वलन्त-
मङ्गारपुंजमिव कर्षति भृंगसंघं ॥

अत्र भृङ्गसंघस्वरूपस्य निर्वापितांगारपुंज-स्वरूपत्वेन सम्भावना स्वरूपोत्प्रेक्षा। उपमानस्येह तत्पुंजस्योत्कटा प्रतीतिरस्ति।

सा राधिका मदधिकेतिरुषातिताम्र
श्चन्द्रो विजेतुमुदयं त्वरितो जगाम।
वीक्ष्याथ तत्पदलसत्तरवरांशुजालं
पाण्डु विदग्धहृदयः स बभूव सद्यः ॥

अत्र पूर्वाद्र्यारोहणादिक्रमेण व्योम्नि विचरतो विधो रक्तिमपाण्डिम-लांछनव्यक्तिः स्वाभाविकी, सा चात्र श्रीराधिका-विजिगीषा तदंघ्रिनखरांशु-दर्शन-कृतात्म-तिरस्कारहेतुकत्वेन सम्भाव्यते। न च तस्यां तद्विजिगीषादि हेतुरित्यहेतुत्वेन सम्भावना हेतूत्प्रेक्षा ॥

वीक्ष्यावलग्नं सरसीरुहाक्ष्याः विभज्यमानं स्तनयोर्भरेण।
तयो विधृत्यै विधिरद्भुताभिर्बबन्ध तत् किं त्रिबली-लताभिः ॥

अत्र मध्यः स्वयमेव स्तनौ धरति न तु लताबन्धन-भावेनाध्यवसितायास्त्रिवलीशालितायाः सामर्थ्यादिति मध्यकर्तृकायाः स्तनविधृतेस्तत्फलत्वेन सम्भावना फलोत्प्रेक्षा ॥ १७ ॥

द्योत्यार्थद्योतनं मुद्रा शब्दैः प्रकृतवाचिभिः।

यथा—पुष्पमार्गणमनोरथोद्धतेत्यादि। अत्र नायिका-वर्णनपरेण रथोद्धता-शब्देन रथोद्धताख्यस्य सूच्यस्य छन्दसः सूचनं मुद्रा॥ एवमन्यत्र च बोध्यं ॥ १८ ॥

विचित्रं तद्विरुद्धं चेत् कुर्य्यादिष्टफलाप्तये ॥

यथा—नमत्युन्नतये प्राणान् मुंचत्याजीवनाप्तये।
दुःखीयति च सौख्याय को मदः सेवकात्परः॥ १९ ॥

समाधिः सुकरं कार्य्यं यदि हेत्वन्तराद्भवेत्।

यथा—प्रणम्य पादौ वृषभानुजायाः,
प्रसादनं कुर्वति पंकजाक्षे।
तथाम्बुदः प्रांशु जगर्ज वक्र
स्तटीं यथासौ सहसास्य भेजे ॥ २० ॥

समं स्यादाभिरूप्येण श्लाघा चेद्योग्यवस्तुनः।

यथा—विसर्गव्यग्रचित्तोऽपि विधिर्युक्तविधानकः।
पिचुमर्द्दफले काकः सहकारे कृतः पिकः ॥ २१ ॥

सारः स्यात्प्रांतविश्रांतो यद्युत्कर्षो यथोत्तरं ।

यथा—राज्यं सारं वसुधायां राज्ये पुरं पुरे सौधं ।
सौधे तल्पं तल्पे वरांगनाऽ नंगं सर्वस्वं ॥ २२ ॥

श्लेष स्त्वेकार्थकैः शब्दै र्यद्यनेकार्थवाचनं ॥

यथा—प्रवर्त्तयन् क्रियाः साध्वी र्मालिन्यं हरितां हरन् ।
भूयसा महसा दीप्तो विराजति दिवाकरः ॥

अत्र रवि र्नृपविशेषश्च वाच्योऽभिधाया अनियमात् तत्र कोऽभिधया परस्तु तत्तुल्यया रूढ़ि-लक्षणाया बोध्यः ॥ २३ ॥

नष्टेऽपि हेतौ तत्कार्य्यं यदि हेत्वंतराद्भवेत् ॥

पुनः स्वगुणलब्धिर्वा पूर्वरूपं तदा द्विधा ।

क्रमेणोदा—ज्योत्स्न्यां विहरतो रात्र्यां युनोरस्तमगाद्विधुः ॥
अभूज्ज्योत्स्नी तथैवासौ तयो र्वदनकान्तिभिः ॥
तव करकमलस्थां स्फाटिकी मक्षमालां
नखकिरण-विभिन्नां दाडिमी-बीजबुद्ध्या ।
अनुकलमनुकर्षन्येन कीरै र्निवद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥ २४ ॥

उत्तरं तूत्तरं श्रुत्वा प्रश्न श्चेत्परिकल्प्यते ।
वहूनि वा विचित्राणि प्रश्नप्रतिवचांसि तत् ॥

क्रमेणोदा—मदुरसि सौरभलोभात्पतितान्मृगनाभिभाविते मधुपान् ।
निवारयन्त्या विदितं न मया नखक्षतं तदाभ्युदितं ॥

अत्र त्वद्वक्षसि कस्मादमूनि क्षतानीति प्रश्नो गम्यते ।

किं गेयं भगवन्नाम किं पेयं तत्कथामृतं ।
किं हेयं गुरुवैमुख्यं किं ध्येयं तत्पदाम्वुजं ॥

न चेयं सप्रश्नपरिसंख्या । अन्यव्यपोहे तात्पर्य्याभावात् ॥ २५ ॥

पृष्टं किंचिदपृष्टं वा यद्युक्तं परिकल्पते।
तत्समान्यनिराशाय परिसंख्या तदा भवेत्॥

किंचिद्वस्तु पृष्टमपृष्टं वा गदितं सद्यदि तत्तुल्यान्यव्यावृत्तये कल्पते, तदा परिसंख्या। तत्रोभयत्र व्यावर्त्यं व्यंग्यं वाच्यं चेति चतुर्धासौ॥

तत्र पृष्टं यथा—कः खलु चिन्तनविषयो रघुपतिरिह के पुनः पूज्याः।
तत्सेवका न चान्ये तत्पदपंकज-वर्हिभूताः॥

अपृष्टं यथा—ध्येयो बुद्धिमता कृष्णो भगवान्जगदीश्वरः।
सेव्या वेदविदो विप्रा नत्वन्ये हेतुवादिनः॥ २६॥

क्रमः स्यात्क्रमिकाणां चेत्पदानां क्रमतोऽन्वयः॥

यथा—मृगमीनसज्जनानां तृणजलसन्तोषविहित-वृत्तीनां।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति॥

इमं यथासंख्यमाहुः॥ २७॥

क्रमादेकमनेकस्मिन् पर्य्यायो व्यत्ययाच्च सः।

एकं वस्तु चेत्क्रमेणानेकत्र स्यादनेकं वैकत्र, तदा पर्य्यायो द्विधा॥

क्रमेणोदा०—चेतो मदीयं चिकुरे निपत्येत्यादि।

विलसन्ति नितम्बिन्यो यत्र चित्रांवरांचिताः।
विचरन्ति शिवा स्तत्र त्वद्वैरिभवने विभो॥ २८॥

उपमां रूपकं प्राहु र्भेदे सति तिरोहिते।
सांगं तत्स्यान्निरंगं च परम्परितमेव च॥

सांगं यथा—माधुर्य्यमधुभिः पूर्णं दशनद्युतिकेशरं।
हरिनेत्रालिनिष्पीतं राधावदन-पंकजं॥

निरंगं यथा—मुखेन्दु स्तव गोविन्द प्रकाशयति मे मनः।

यस्य कस्यचिदारोपः परस्यारोपको यदा।
तत्परंपरितं श्लिष्टाश्लिष्टशब्दविनिर्मितं॥

क्रमेणोदा०—कमलामोद-रोलम्बो महत्पंकजयांशुमान्।
योगिमानस-हंसोऽयं भवताद्भवतापभित्॥

अत्र कमलाया मोद एव कमलानामामोद एवमाद्यारोपो भगवतो रोलम्बत्वाद्यारोपकः।

दारिद्र्यगजपंचास्यो दुर्नयांबुधि-मन्दरः।
दानवारण्य-दावाग्निदुःखं दामोदरो द्यतु॥

अत्र दारिद्र्यादे र्गजत्वद्यारोपो भगवतः पंचास्यत्वाद्यारोपकः॥२६॥

परिणामः क्रियार्थश्चे दारोप्यो विषयात्मना॥

आरोप्य श्चेदारोपविषयात्मना क्रियार्थः प्रकृतक्रियोपयोगी स्यात्तदा परिणामः। यथा—

फुल्लेन साक्षिकमलेन ददर्श कान्तम्।

अत्र कमलमक्षित्वेन परिणतं सत् प्रकृतां दर्शनक्रियां निर्वर्त्तयति॥३०॥

प्रकृतं यन्निषिध्यान्यत् स्थाप्यते सा त्वपह्नुतिः॥
उपमेयं प्रतिषिध्य यदुपमानस्थापन सापह्नुतिः॥

उदा०—अंकं केऽपि शशंकिरे जलनिधेः पंकं परे मेनिरे
सारंगं कतिचिच्च संजगदिरे भूच्छायमैच्छन् परे।

इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमालक्ष्यते।

अत्रेन्दौ कलङ्कादिकं प्रकृतं निषिध्यापि पीतमप्रकृतं तमः स्थापितं॥३१॥

व्याजस्तुति स्तु निन्दायाः स्तुते र्वा व्यत्ययाद्भवेत्॥

निन्दास्तुतिभ्यां वाच्याभ्यां स्तुतिनिन्दे चेत् क्रमाद् व्यंग्ये स्यातां तदा व्याजस्तुतिः॥ क्रमेणोदा०—

भजत स्तव पादपंकजं न च किञ्चित्फलमत्र वीक्ष्यते।
अपि तु स्वजनादि विच्युति विंदितं ते चरितं मयाच्युत ॥

अत्र निन्दया स्तुति र्व्यज्यते।

जगति त्वत्समो नान्यः स्पृहाशून्यः समीक्ष्यते।
हरिकीर्त्तन-रत्नानि कण्ठे यत्कुरुषे न हि ॥ ३२ ॥

अन्योन्यं क्रियया चेत्स्यादुपरागः परस्परं।
एकजातीयया क्रियया मिथ श्चेदुपकारस्तदान्योन्यं ॥

उदा०—राधया माधवो भातीत्यादि। अत्र दीप्तिजननक्रियया मिथो द्वयोरुपरागः ॥ ३३

आधाराधेययोरेकस्याधिक्येऽधिकमिष्यते ॥

आधाराधिक्ये यथा—वक्षसि ब्रजराजस्य नीलाब्जमिव यद्वपुः।
फणीन्द्रेणाप्यगण्या ये कथं मांत्यत्र ते गुणाः ॥
आधेयाधिक्ये यथा—यस्यांतः सकलं विश्वमपश्यद्गोकुलेश्वरी।
विप्रं वीक्ष्योद्गतामोदा स्तस्मिन्वपुषि ना ममुः ॥३४

विनोक्ति स्तु विनैकं चेत्सन्नसन् वा निबध्यते।
एकेन विना यद्येकः शोभनोऽशोभनो वा स्यात्तदा विनोक्तिः ॥

क्रमेणोदा०—विना कञ्चुलिकां धत्ते वनिता वत चारुतां।
रामा रूपाभिरामापि न भाति विनयान् विना ॥ ३५

व्याजोक्ति स्तु यदि व्यक्तं छद्मना विनिगूह्यते ॥

यथा—मदुरसीत्यादि ॥ (६६ पृष्ठायां)। अत्र कान्तकृतानि नखक्षतानि भृङ्गत्रस्तत्रस्वनखक्षतव्याजेन गोपितानि ॥

यथा वा—फुल्लोज्ज्वलवनमालं कामयते का न माधवं प्रमदा।
हरये स्पृहयसि राधे नहि नहि वैरिणि वसन्ताय ॥
यथा वा—प्रजल्पन्मत्पदे लग्नः कांतः किं नहि नूपुरः ॥ ३६

समासोक्ति र्यदि श्लिष्टैः परोक्ति स्याद्विशेषणैः ॥

कलाभिरित्यादौ सोऽयं कृष्णो विजयतेतरामिति तुर्य्ये पादे सत्युदाहरणं ॥

अत्र श्लिष्टविशेषणमहिम्ना चन्द्रस्यापि प्रतीतिः ॥ ३७

सहोक्तिः पदमेकं चेत् सहार्थाद्वाचकं द्वयोः ॥

उदा०—स्मितेन सह कान्तस्य तस्या विकसितं मनः ॥

यथा वा—सहाधरतलेनास्या यौवने रागवान् प्रियः ॥ ३८

अद्भुतात्यन्तशौर्य्यादिख्याति रत्युक्ति रुच्यते ॥

यथा—राजन्सप्ताप्यकूपारा स्त्वत्प्रतापाग्निशोषिताः ।
त्वद्वैरिराजवनिता-वाष्पपूरेण पूरिताः ॥

यथा वा—यच्छन्तमर्थान् विविधान् जनेभ्यः श्रुत्वान्बरीषं नृपसार्वभौमं ।
कल्पद्रुमा याचकभावभाज स्तस्य प्रतीहारतटीं भजन्ते ॥ ३९ ॥

डिम्भादि निजचेष्टोक्तिः स्वभावोक्ति रुदीर्य्यते ॥

यथा—मुखपुटनिहित-करांगुलिरुच्चलचरणः स देवकीसूनुः ।
क्षणरुदितस्मितकुशलो ब्रजकुलमुदमतितरामतनोत् ॥ ४०

निरुक्ति श्चेद्भवेन्नाम्नां योगादन्यार्थकल्पना ॥

यथा—स्वज्ञाति-शत्रोः शक्रस्य संछिन्दन्दर्पविप्लवणं ।
दधाराह्वयमन्वर्थमेष गोवर्द्धनो गिरिः ॥ ४१

प्रकृतस्योपमानेन यो निगीर्णस्य निश्चयः ।
अन्यदेवेति यद्वस्तु तदेव परिकीर्त्त्यते ॥

यत्तु चेद्यदिशब्दाभ्यामसंभाव्यार्थकल्पनं ।
पौर्वोक्तिव्यत्ययो यत्र वर्ण्यते हेतुकार्य्ययोः ।
योगेऽप्ययोगोऽयोगेऽपि योगो यः परिकल्प्यते ॥
षड्विधातिशयोक्तिः सा कविभिः समुदीर्य्यते ॥

अन्तर्निगीर्णस्योपमेयस्य यदुपमानेन निरूपणं सातिशयोक्तिः प्रथमा।

यथा—जाता लता हि शैले जातु लतायां न जायते शैलः।
संप्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातं॥

अत्र लतया नायिका निश्चीयते, गिरिभ्यां तु स्तनयुग्मं।
यच्च तदेव वस्तित्वदमन्यदेवेति वर्ण्यते सा द्वितीया॥

यथा—अन्यदेवांगलावण्यमन्याः सौरभसंपदः।
अस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्॥

यदिचेच्छब्दाभ्यामसंभाव्यार्थस्य यत्कल्पनं सा तृतीया॥

यथा—प्रवालमुक्ताद्युतिपुष्पजाल श्चलन् यदि स्यात्कनकाक्तमूलः।
तापिञ्छशाखी शिखिपिच्छमौले स्तदास्य दास्याय दधीत चेतः॥

हेतोः शीघ्रकारितां वक्तुं कार्य्यस्य यत्प्राग्वचनं यौगपद्यं वा सा चतुर्थी॥ क्रमेण यथा—

(१) जातः संसृतिसर्पस्य पूर्व दर्प-परिक्षयः।
श्रीरङ्गिसङ्गिनां संगः संप्रति प्रतिपद्यते॥

(२) भजन्ति युगपद्वीर ज्यां रिपूंश्च तवेषवः।

सम्बन्धेपि सति यदसम्बन्धकल्पनं सा पञ्चमी।

यथा—अनयोरनवद्यांगि स्तनयो जृम्भमाणयोः।
अवकाशो न पर्य्याप्त स्तव बाहुलतान्तरे॥

अत्र बाहुमध्ये स्तनावकाश-योगेऽपि तदयोगो वर्णितः॥

असम्बन्धे सत्यपि यत्सम्बन्धकल्पनं सा षष्ठी॥ यथा—

दिनैः कतिपयै र्यायात्क्षयं मेरु र्दिनान्तकृत्।
इत्यभ्येति मुदं कोकी दातरि त्वयि भूपते॥

अत्र चक्रवाकया दिवसावसानकारिसुमेरुविनाश-सम्भावनप्रयुक्तानन्दा सम्बधेऽपि तत्सम्बन्धो वर्णितः॥ ४२

हेतौ सति फलाव्यक्ति र्विशेषोक्ति रुदीर्य्यते॥

यथा—अनुरागवती सन्ध्या दिवस स्तत्पुरःसरः।
अहो दैवगति श्चित्रा तथापि न समागमः॥

यथा वा—शयाना हस्ताब्जे मृदुलमुपधायाधरदलं
हरे र्मन्दान्दोलालकततिभि रावीजिततनुः॥
दधाना साशंकांगुलिभिरभिसंवाहनविधिं
तथाप्येषा वंशी न हि भजति निद्रालवमपि॥ ४३॥

युक्तिः कथञ्चिद्व्यक्तं चेत् क्रियया विनिगूह्यते॥

यथा—दम्पत्यो र्निशि जल्पतो र्गृहशुकेनाकर्णितं यद्वच
स्तत्प्रात र्गुरुसंनिधौ निगदत स्तस्यातिमात्रं वधूः।
कर्णालम्बित-पद्मरागशकलं विन्यस्य चञ्चुपुटे
व्रीडार्त्ता विदधाति दाडिमफल-व्याजेन वाग्बन्धनं॥

व्याजोक्तौ वाचा गुप्तिरिह तु क्रिययेति भेदः॥ ४४

लोकवादानुकारस्तु लोकोक्ति र्भण्यते बुधैः॥

यथा—नामैव ते वरद वांछितदातृभावं
व्याख्यात्यतो न वहसे वरदानमुद्रां।
विश्वप्रसिद्धतरविप्रकुल-प्रसूते
र्यज्ञोपवीतवहनं हि न खल्वपेक्ष्यं॥

अत्रोत्तरार्द्धं लोकप्रवादानुकरणं॥ ४५

लोकोक्तिरेव छेकोक्ति र्भवेदर्थान्तरान्विता॥

लोकोक्ते रर्थान्तरगर्भत्वे छेकोक्तिः॥ यथा—

अहिरेवाहि जानीयादहिपादान्नचापरः।

कस्मिन्वने कृष्णोऽद्य क्रीडितुमिच्छतीत्येकस्मिन् सख्यौ कंचित्सखायं पृच्छति सति कृष्णान्तिकस्थं सुबलमुद्दिश्य स तमाह अहिरेव हीति लोकप्रवादानुकारोऽयं। स चास्य स्मारकव्यापारमप्ययमेव नेत्त्येत्य र्थान्तरगर्भां करोति॥ ४७

अहेतौ हेतुताक्लृप्तिः प्रौढ़ोक्ति रिति कीर्त्त्यते।
कार्य्यातिशयायाहेतौ तद्धेतुत्व-कल्पनं प्रौढ़ोक्तिः॥

यथा—कल्पतरुकामदोग्ध्रो चिन्तामणि धनदशंखानां।
रचितो रजोभरपय स्तेजः श्वासान्तरां वरै रेषः॥

अत्र राज्ञोऽतिदातृत्वं वर्ण्यते तच्च कल्पवृक्षादि पञ्चनिर्मितत्वं हेतु नंतु वस्तुत स्तदस्ति॥ ४८॥

मिथ्याध्यवसिति र्मिथ्यासिद्ध्यै मिथ्यार्थनिर्मितिः॥

यथा—गोविन्दचरणद्वंद्वं मायावादविशारदः।
लभते सच्चिदानन्दं खपुष्पस्तवकं वहन्।

न चेयं तृतीयातिशयोक्तिः चेद्यदि-शब्दाभ्यामसंभविनोऽर्थस्या कल्पनात्॥ ४९

फलोत्पत्ति र्विना हेतुं यत्र स्यात् सा विभावना॥

यथा—अपीतक्षीवकादम्बमसंमृष्टामलांबरं।
अप्रक्षालितसूक्ष्मांबु जगदासीन्मनोहरं॥

अत्र हेतोरुक्ता स्तस्य प्रतिबध्यत्वे कार्य्यविरूपत्वेनाख्यात्यां च केचिद्विभावनां मन्यन्ते॥ क्रमेणोदा०—

उद्यानमारुतोद्धूत चूतचम्पक-रेणवः।
उदस्रयन्ति पान्थानामस्पृशन्तोऽपि लोचने॥

अत्र स्पर्शक्रिया-वैकल्यमेव हेतो रकृत्स्नता।

चित्रं तपति राजेन्द्र प्रताप-तपन स्तव।
अनातपत्रमुत्सृज्य सातपत्रं द्विषद्गणं॥

अत्र तापहेतोः प्रतापतपनस्यातपत्रं प्रतिबन्धि।

उदिते कुमारसूर्य्ये कुवलयमुल्लसति भाति नक्षत्रं।
मुकुलीभवन्ति चित्रं परराजकुमारपाणिपद्मानि॥

अत्र कुवलयोल्लासादेः कार्य्यस्य सूर्य्योदयो नानुरूपो हेतुः। उभयत्र विरोधाभासेन संकीर्णत्वं।

अम्बुजमम्बुनि जातं क्वचिदपि न जातमंबुजादंबु।
मुरभिदि तद्विपरीतं पादांभोजान् महानदी जाता॥

अत्र नद्याः कारणत्वेन ख्यातं नाम्भोजं॥ ५०॥

उपायेन विना सिद्धि र्वांछितार्थस्य यद्भवेत्।
उपायाद्यदुपायार्थादुपेयस्योपलंभनं।
यच्चेष्टाभ्यधिकार्थस्य सिद्धि स्तत् स्यात् प्रहर्षणं॥

क्रमेणोदा०—मुनेर्दु र्वाससः कोपात्त्रातुमस्मानलं हरिः।
इति चिन्तयतो राज्ञस्तत्रासीत्स्वयमेव सः॥

फलोपायसाधकाद्यत्नादांतरालिकोपायसिद्धिमनपेक्ष्य फलस्य चेत् साक्षात्-प्राप्तिः स्यात्तदपि प्रहर्षणं। यथा—

अंजनाय खनन्मूलमद्याहं निधि-दर्शिते।
अधस्तादलभं तस्य सर्वदुःखहरं निधिं॥

अत्रांजन-निरपेक्षो निधिलाभः॥ यथावा—

ध्रुवाय स्मृतये विष्णो र्यशो वेश्मनि कीर्त्तयन्।
बहुलाश्वो नृप स्तस्मिंस्तमपश्यत्समागतं॥

अत्र स्मृतिनिरपेक्षः साक्षात्कारः॥

स्थानाभिकामस्तपसि स्थितोहं त्वां दृष्टवान् साधु मुनीन्द्र-गुह्यं।
काचं विचिन्वन्निव दिव्यरत्नं स्वामिन्कृतार्थोऽस्मि वरं न याचे॥ ५१

यत्साक्षात्कारणं भूतभाविनां भाविकं तु तत्॥

यथा—आसीत्कंचुलिकात्रेति पश्याम्यस्याः कुचद्वयं।
कलयामि नितम्बं च रणिष्यन्मणिमेखलं॥

अत्र पूर्वार्द्धे भूतस्य साक्षात्कारः, परार्द्धे तु भाविनः॥ ५२

उदात्त मतिसंपत्ति-वर्णनं कविभिः स्मृतं ॥

यथा—प्रतिबिम्बितनिकुरम्बैः करम्बिते मुकुर-मन्दिरे कृष्णं ।
चतुरोपि चतुर्मुखभू र्मुनि रतिकष्टादबोधिष्ट ॥ ५३

परिवृत्तिः स्मृतार्थानां यः स्याद्विनिमयो मिथः ।

यथा—कृष्णादंकस्रजं नीत्वा मणिमालां न्यधात् प्रिया ।
गृहीत्वा स तु साचीक्षामदाद्वक्षोजपीडनं ॥ ५४

विध्याभासो निषेधेऽपि विधिश्चेद्व्यक्तमोच्यते ॥

यथा—गच्छ गच्छसि चेत्कान्त पन्थानः संतु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

अत्र त्वयि गतेह न भविष्याम्यतस्त्वया न गन्तव्यमिति निषेधे गच्छेति विधि र्दर्शितः ॥ ५५

अविरोधि विरोधित्वं विरोधाभासमुज्जगुः ।
जात्यादीनां तु जात्याद्यः स स्याद्बहुविधो मतः ॥

यथा—दाव स्तव हिमवातः पंकजमुष्मप्रवर्षि चन्द्रमुखि ।
मर्मकृतः खलु मधुपा श्चेलं च हलाहलं किमिदं ॥

अत्र वातपंकजमधुपचेल-शब्दा जातिवाचकाः । दावोष्मकृत-हलाहल शब्दास्तु क्रमाज्जातिगुणक्रियाद्रव्यवाचकाः । तेषामेतेषां च क्रमाद्विरोध वदवभासः । यथा वा—

ध्वनिः पिकानां मधुरोऽप्यभूत्कटुः शीतोपि दाहं तनुते स्म मारुतः ।
सुकोमलोऽप्यच्युत ! पुष्पकन्दुको भवेद्वियोगे पविरेव सुभ्रुवः ॥

अत्र मधुरशीतकोमल-शब्दा गुणवाचकाः । कटुदाहपविशब्दाः क्रमाद् गुणक्रियाद्रव्यवाचकाः, एवमन्येऽपि भेदा बोध्याः ॥

पराभवं फेनिलवक्त्रतां च बन्धं च भीतिं च मृतिं च कृत्वा ।

पवर्गदातापि शिखण्डमौले त्वं शात्रवाणामपवर्गदोसि॥ "जहार हृदयं रामा हारिण्यपि विहारिणी"त्येवमादिषु श्लेषविच्छित्तिकः सः॥ ५६

पर्य्यायोक्तं यदा भंग्या व्यंग्यं वाच्यवदिष्यते।

यथा—गर्वो नैसर्गिकं वासं विजहौ रतिचेतसि।
हृदि दाशरथे धैर्य्यं विलोक्य जनकात्मजां॥

अत्र रति निर्गर्वा रामो निर्धैर्य्य इति व्यंग्योऽप्यर्थो भङ्गी-विशेषोपनिबन्धाद्वाच्यवत् प्रकाशते ॥ ५७ ॥

एकस्य बहुधोल्लेखादुल्लेखः स्यादलंकृतिः॥

यथा—प्रिय इति गोपवधूभिः शिशुरिति वृद्धैः रधीश इति देवैः।
नारायण इति भक्तै ब्रह्मेत्यग्राहि योगिभि र्देवः॥ ५८

प्रकृताप्रकृतानां यद्धर्मैक्यं दीपकं तु तत्।
एकं क्रियासु बह्वीषु कारकं यदि तन्मतं॥

तद्दीपकं। क्रमेणोदा०—नदीनां च बधूनां च भुजगानां च सर्वदा।
प्रेम्णामपि गति र्वक्रा कारणं तत्र नेष्यते॥

अत्राप्रकृतानां नद्यादीनां प्रकृतानां प्रेम्णां च वक्रगति रेको धर्मः।

द्विःशरान्नाभिसंधत्ते द्विः स्थापयति नाश्रितान्।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते॥

अत्रैकं कर्त्तृकारकमभिसंध्यादिषु क्रियासु सम्बन्धं पश्चान्नायोगः।
यथा वा—मोदते चिन्तयत्यन्तर्वेपते वीक्ष्य सा हरिं॥ ५६

मालादीपक माद्यं चेद् यथोर्ध्व मुपकारकं॥ यथा—

त्वयि संगर-संप्राप्ते धनुषा सादिताः शराः।
शरैररिशिर स्तेन भूस्तया त्वं त्वया यशः॥

यथा वा—भाग्यै र्भूम्या भवान्प्राप्तो भवता महिता मतिः।
मत्या मुमुक्षुशरणं चरणं मुरवैरिणः॥

अत्र भूम्यादिभिः पूर्वपूर्वैरुत्तरोत्तरेषु भवदादिषु प्राप्तिक्रियाकर्मत्वविधान रूपोपकृतिः ॥ ६० ॥

वर्ण्यानामितरेषां वा धर्म्मैक्यं तुल्ययोगिता।

प्राकरणिकानामेकधर्माभिसंबन्ध स्तुल्ययोगिता। अप्राकरणिकानां वा स तथा। क्रमेणोदा०—

आयुः श्रियं यशो धर्म्मं लोकानाशिष एव च।
हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः॥

अत्र महदतिक्रम-नाश्यत्वेन प्रकृतानां पुरुषायुःप्रभृतीनां हन्तिरूपैक-क्रियया सम्बन्धः॥

त्वदंग-मार्दवे दृष्टे कस्य चित्ते न भासते।
मालती-शशभृल्लेखा-कदलीनां कठोरता॥

अत्र नायिकासौकुमार्य्य-वर्णने प्रकृतेऽप्रकृतानां मालत्यादीनां कठोरत्वरूप-कगुणसम्बन्धः॥ ६१

मीलितं त्वतिसादृश्याद् भेद-श्चेन्नैव लभ्यते।

उदा०—श्यामले कुचकस्तूरी जनै र्नालक्षि वक्षसि।
अलिकेऽलक्तकं चापि गैरिकाक्ते मधुद्विषः॥ ६२

कुतश्चिद् भेदभाने तु प्रोक्तमुन्मीलितं बुधैः॥

उदा०—राधे तडिद्गौरि तवैष गण्डयोः कर्णावलम्बी नवकेतकीच्छदः।
न सौरभेणापि गतो विभिन्नतां मधुव्रतेनैष विविच्य बोधितः॥ ६३

सामान्य मतिसादृश्याद् विशेषश्चेन्न लक्ष्यते॥

उदा०— मल्लिका-मालभारिण्यः सर्वाङ्गीणार्द्र चन्दनाः।
क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः॥ ६४

विशेषस्य कुतश्चिद्यद्भानं स स्याद् विशेषकः॥

उदा०—आसन्पद्माकरे स्त्रीणां पद्मान्यास्यानि संप्रति।

लक्षितान्युदिते चन्द्रे पद्मान्यास्यानि च स्फुटं ॥ ६५

मीलितोदाहरणे श्यामतातिसाम्याद्वक्षसः पृथक् कस्तूरी न भासते। सामान्योदाहरणे वस्तु-पार्थक्यावभासेऽपि शौक्ल्यातिसाम्याद्व्यावर्त्तक-विशेषो नोपलभ्यते। उन्मीलित-विशेषकौ तु तयोः प्रतिद्वन्द्विनावन्वर्थौ ॥

यस्मिन् विशेष-सामान्यविशेषाः स विकस्वरः।

प्रस्तुतविशेषसमर्थनाय सामान्यमुपन्यस्यापरितोषात् पुनर्विशेषश्चे-दुपन्यस्यते, तदा विकस्वरः॥

उदा०—अनन्तरत्न-प्रभवस्य तस्य हिम्नः सौभाग्यविलोपि-जातं।

एको हि दोषो गुणसंनिपाते निमज्जतींदोः किरणेष्विवांकः॥

तस्य हिमाचलस्येति प्रकरणात् ॥ ६६

एकस्य गुणदोषाभ्यां यदि स्यातां परस्य तौ।

क्रमतो व्युत्क्रमाच्चापि तदोल्लास श्चतुर्विधः॥

तौ गुणदोषौ। तत्रैकस्य गुणेनान्यस्य गुणो यथा—

कुसुमावचयादंस स्तया यत्परिपीडितः।

एकः कृती मदंगेषु शेषमंगं भुवो भरः॥

अत्र नायिका-सौन्दर्यगुणेन तन्निपीडितस्य स्वांसस्य कृतित्व-गुणो निरुपितः। दोषेण दोषो यथा—

लोकानन्दनचन्दन द्रुम सखे नास्मिन् वने स्थीयतां

दुर्वंशैः कठिनै रसारहृदयैराक्रान्तमेतद् वनं।

ते ह्यन्योन्य निघर्ष जातदहनज्वालावलीसंकुला

न स्वान्येव कुलानि केवलमिदं सर्वं दहेयु र्वनं॥

अत्र वेणूनां परस्परसंघर्षसंजातदहनसंकुलत्व-दोषेण वननाशरूपो दोषो वर्णितः॥ गुणेन दोषो यथा—

पानार्थिनो मधुकरा यदि कर्णवातैर् दूरीकृता करिवरेण मदान्धबुद्ध्या।
तस्यैव गण्डयुगमण्डन-हानिरेषा भृङ्गा पुनर्विकचपद्मवने चरन्ति॥

अत्र मधुपानामलंकारित्वगुणेन गजस्य तत्प्रतिघ्नयो दोषत्वेनोक्तः।
दोषेण गुणो यथा—

आघ्रान्तःपरिचुम्बितं प्रतिमुहु र्लीढं पुनश्चर्वितं
त्यक्तं वा भुवि नोरसेन मनसा तत्र व्यथां मा कृथाः।
हे सद्रत्न तवैतदेव कुशलं यद्वानरेणादरा
दन्तः सारविचारणव्यसनिना चूर्णीकृतं नाश्मना॥

अत्र वानरस्य चापलदोषेण रत्नस्य चूर्णनाभावो गुणत्वेन वर्णितः।
अत्राद्यन्तयोरुल्लासोन्वर्थः। मध्ययोस्तु छत्रिन्यायेन लाक्षणिकः॥ ६७॥

अवज्ञा गुणदोषाभ्यां न स्यातां चेत्क्रमेण तौ।

तौ गुणदोषौ। एकस्य गुणदोषाभ्यां परस्य चेद् गुणदोषौ न स्यातां
तदा अवज्ञालंकारः॥ तत्र गुणेन गुणाभावो यथा—

गोविन्दमरविन्दाक्षं जगदानन्ददायिनं।
श्रद्धान्तिपति चेद्यश्चेत्तेन किं तस्य लाघवं॥

अत्र भगवद्गुणेन चैद्यहृदुल्लासरूपगुणाभावः॥
दोषेण दोषाभावो यथा—

हृष्यत्यभ्युदिते यस्मिन्सुधांशौ निखिलं जगत्।
ग्लायन्ति यदि पद्मानि का हानि स्तस्य वर्ण्यते॥
अत्र पद्मग्लानि-दोषेण चन्द्रस्य लघिमदोषाभावः॥ ६८

दुःखस्याभ्यर्थनानुज्ञा तस्मिन्नेव सुखेक्षणात्॥

यथा—विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्॥ ६९

प्रतिषेधस्तु स प्रोक्तो यः ख्याताभावनिर्णयः॥

अतिप्रसिद्धो निषेधः स्वतोनुपयुक्तो यद्यर्थान्तरं गर्भीकरोति, तदा तेनैव चारुत्वांचितोऽयं प्रतिषेधोऽलङ्कारः। यथा—

न विषेण न शस्त्रेण नाग्निना न च मृत्युना।
अप्रतिकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः॥

अत्र स्त्रीणां विषादिनिर्मितत्वाभावः ख्यात एव निर्णीयमान,स्तासां क्रौर्यं विषादिभ्योऽप्यतिशयितमित्येतमर्थं गर्भीकरोति स चा प्रतीकारेत्यनेन व्यक्तोभवति॥ ७०

असम्भाव्यतयार्थस्य निष्पत्तिः स्यादसम्भवः।

यथा— अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभि स्तृष्णा-तरलितमनोभि र्जलनिधिः।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः॥ ७१

असंगति र्भवेद्भिन्नदेशत्वे हेतुकार्ययोः॥

यथा—तवाधरौष्ठे क्षतमंजनं च मम व्यथार्त्तं मलिनञ्च चेतः।
पीत स्तया ते वदनासवस्त्व मत्तः कुतोनर्थपरंपरेयं॥ ७२॥

वांछितप्रतिकूलार्थ प्राप्ति स्तु स्याद् विषादनं॥ यथा—
राज्याभिषेक स्त्वविरम्बुजाक्षो रामः प्रभाते सुखयेदयं नः।
इत्थं सुमित्रा-तनये ब्रुवाणे तमादिशत् पंक्तिरथो वनाय॥ ७३॥

हेतोः कार्य्यात्मनाख्यानं हेतु रित्यभिधीयते॥ यथा—
अद्रीणां विद्रुतिः साक्षादाकृष्टि र्व्रजसुभ्रुवां॥
स्थैर्य्यं स्रोतस्वतीनां तु जीयाद्वंशीध्वनि र्विभोः॥

अत्राद्रिविद्रवादौ हेतुरपि वंशीनादस्तदादिरूपतया निबद्धः॥ ७४॥

अनुकूलं प्रातिकूल्याद्यदि स्यादनुकूलता॥ यथा—
दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै
राविद्धो दशनैः क्षताधरपुटः श्रोणितटेनाहतः।

हस्तेनानमित: कचेऽधरसुधापानेन समोहित:
कान्त: कामपि तृप्तिमाप तदहो कामस्य वामा गतिः ॥
यथा वा—कंसः कृष्णाहृतप्राणो ममज्जानन्दसम्पदि । ७५ ।

दण्डापूपिकयान्यार्थागमो ऽर्थापत्ति रिष्यते ।

मूषिकेणोहस्थो दण्डश्चेद्भक्षित स्तर्हि तदन्तिकस्थो ऽपूपोऽपि भक्षित एवेत्यपूपभक्षणमर्थादागतमिति न्यायो दंडापूपिका। यथा—

हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिंकराः ॥

यथा वा—म्लेच्छानामपि चेतांसि हरन्ति भगवद्गुणाः ।
शुचीनां वेदवेदान्त-वेत्तृणां का कथा पुनः ॥ ७६ ॥

निश्चय स्तु निषिध्यान्यत्प्रकृतं चेन्निरूप्यते ॥ यथा—

हृदि विसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ।

अत्र भुजङ्गादिकमप्रकृतं निषिध्य प्रकृतं मृणालहारादि स्थाप्यते ।

यथा वा—वदनमिदं सरोजं नयने नेंदीवरे एते ।
इह सविधे मुग्धदृशो मधुकर न मुधा परिभ्राम्यं ॥ ७७

सन्देह: स स्मृतो यः स्यात्प्रकृतेऽन्यस्य संशयः ॥

निश्चयगर्भो निश्चयान्तः शुद्धश्च सः ॥

क्रमेणोदा०—किमयं मुदिरः कथं पृथिव्यां विधुरस्मिन्नयमत्र लांछनं क्व ।
इह किं चपला क्व चापलं तत् किमु कृष्णः सुमुखः स पीतवासाः ॥

मुखमस्याः किं कमलं: किमिन्दुसारेण निर्मितं धात्रा ।
आनन्दयति मदक्षिभ्रमरचकोरौ यदश्रान्तं ॥

पलाशकुसुम-भ्रांत्या शुकतुण्डे पतत्यलिः ।
सोऽपि जम्बुफलभ्रान्त्या तमलिं धर्त्तुमिच्छति ॥

साम्यातिशयतोऽ तस्मिंस्तद्बुद्धि र्भ्रांतिमान् स्मृतः ॥
यथा—स्वमूर्त्तिं स्फुरितां स्वच्छे सा वीक्ष्य हरिवक्षसि ।
सपत्नी-भ्रान्तितः कान्तिमरुणां नेत्रयो र्दधौ ॥ ७९

सदृशानुभवाद्वस्तुस्मृतिः स्यात् स्मरणं मतं ॥ यथा—
सरस्यां पंकजं पश्यन्सस्मार वनिताननम् ॥ ८०

अभवन्वस्तुसम्बन्धो यदि वा कुत्रचिद्भवन् ।
कल्पयत्युपमां प्रोक्ता तदा द्वेधा निदर्शना ॥

तत्रासम्भववस्तु-सम्बन्धनिबन्धना यथा—

क्वाहं दरिद्रः पापीयान्क्वायं श्रीपतिरच्युतः ।
तृषार्त्तमुपसंयातो निपातः सौरसैन्धवः ॥

अत्र पंचपूल्यः षट् पूपा इतिवदन्वयोऽसंभवन् वाक्यार्थयो र्विम्बप्रतिविम्बभावं कल्पयति । स च दरिद्रस्य मम श्रीकान्त-साक्षात्कारस्तृष्णार्त्तस्य गङ्गासङ्गम इवेति । यथा वा—

आज्ञा-भंगो नरेन्द्राणां विप्राणां मानखण्डनं ।
पृथक्शय्या वरस्त्रीणामशस्त्रविहितो वधः ॥

अत्रापि नृपाज्ञाभङ्गादिकमशस्त्रकृतवधतुल्यमिति तद्भावमावेदयति ।

यथा वा—सुभ्रु त्वद्वदनं धत्ते लीलां पीयूषदीधितेः ।

अत्र कथमन्यस्यान्यलीलाधारणमिति सादृश्ये पर्य्यवसानं । अथ सम्भवद्वस्तु-सम्बन्धनिबन्धना यथा—

कुमुदान्युदयन्नेष विकासयति चन्द्रमाः ।
बोधयन्निजसंपत्तेः फलं मित्रानुकंपनं ॥

अत्रदृगर्थबोधनक्रियायां कर्त्तृतया विधोरन्वयः संभवत्येव ; स च विधुकृत-कैरवविकासस्य सम्पन्न-कृतसुहृत्प्रसादस्य च तद्भावमावेदयति ॥ ८१ ॥

समुच्चय स्तु सार्द्धं चेत्पतंत्येकत्र हेतवः ।
गुणौ क्रिये वा युगपत्स्यातां किं वा गुणक्रिये ॥

बहूनि कारणानि यदि खलेकपोतन्यायेनकस्मिन् कार्यें सहिताः पतन्ति, यदि वा गुणौ क्रिये गुणक्रिये च युगपन्निबध्यते, तदा समुच्चय श्चतुर्धा ॥ क्रमेणोदा०—

कुलं रूपं वयो विद्या धनं च मदयत्यमुम्।
मधुरं च वच स्तस्य विशदं च मनो मम।
गतश्च मथुरां कृष्णः प्रविष्टश्च हृदि ज्वरः।
रक्तं च हलिनो वक्त्रं सकम्पश्च स मुष्टिकः ॥ ८२

भवेत् परिकरो नाम साकूतं चेद्विशेषणं ॥

उदा०—अमेध्य-प्रतिजातस्य विट्पात्रस्य विनाशिनः।
वपुषः परिपोषाय मूढ़ाः पापानि कुर्वते ॥

अत्र विशेषणानि सर्वथा विशेष्यापकृष्टत्वाभिप्राय-गर्भाणि। यथा वा—

एष लक्ष्मीपतिः कृष्णो दारिद्र्यं मेऽपनेष्यति।

अत्र लक्ष्मीपतिरिति विशेषणं दैन्यविनाशसामर्थ्याभिप्रायगर्भं ॥ ८३।

साकूतत्वे विशेष्यस्य मतः परिकरांकुरः ॥

यथा— लिखितुं कार्त्तवीर्य्य स्ते विभूती र्मघवेक्षितुं।
वक्तुं शेषः प्रभुर्भूमन् क्वाहमेष क्व ताः पुनः ॥

अत्र कार्त्तवीर्य्य इत्यादीनि विशेष्याणि सहस्रवाहुत्वाद्यभिप्राय-गर्भाणि ॥ ८४ ॥

सूक्ष्मं त्वाकूतचेष्टा चेत्स्वाकूतज्ञे प्रकाश्यते।

स्वाभिप्रायाभिज्ञं प्रति यदि तदाकूतव्यंजकं चेष्टितं झटिति तद्बोधनाय प्रकाश्यते, तदा सूक्ष्मं नाम ; यथा—

ललाटलग्नानलकान्समीक्ष्य सखी स्वसख्या श्चतुरा प्रभाते।
लिलेख तस्याः सशरं मृगाक्ष्याः शरासनं पाणिसरोजयोः सा ॥

अत्र स्वाकूताभिज्ञा या नायिकायाः पाणौ धनुर्वाणलिखनरूपं चेष्टितं त्वया पुरुषवत् निशि चेष्ठितमित्याकूतं। पुरुषाः खलु धनुर्वाणभृतो यद्-भवन्ति। यथा वा—

कान्तमायान्तमालोक्य मन्दिरे चेन्दिरानना ।
चकार करकंजस्य कुट्मलीभावमुत्सुका ॥

अत्र संकेत-समयावबोधायागते निजाकूतज्ञे नेतरि तद्बोधकमिदं चेष्टितं। रात्रि स्तत्समय इत्याकूतं ॥ ८५

हेतो वाक्यपदार्थत्वे काव्यलिङ्ग मुदीर्य्यते ॥

वाक्यार्थः पदार्थो वा यदि हेतुः स्यात्तदा काव्यलिङ्गं ।

क्रमेणोदा०—यः कीर्त्तयति गोविन्दं संसार स्तस्य नश्यति ।
स्वर्गग्रामटिकां नेच्छेद् गोविन्दार्पित-मानसः ॥

ननु वाक्यार्थ-गतेन काव्यलिंगेन कार्य्यकारणभावीयोऽर्थान्तरन्यासश्च-रितार्थोस्तु, मैवं। हेतुस्तु त्रिविधः—निष्पादकः समर्थको ज्ञापकश्चेति। आद्यः काव्यलिङ्गस्य विषयः। द्वितीयोऽर्थान्तरन्यासस्य। तृतीयस्त्वनुमानस्येति पृथगेव काव्यलिङ्गात्तद्भावीयः सः ॥ ८६

विकल्प स्तुल्यवलयो र्विरोधे चातुरीजुषि ।
यथा—पतत्यविरतं वारि नृत्यन्ति च शिखंडिनः ।
अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥

अत्र कान्तकृतान्त-कर्त्तृकयो र्दुःखनाशयो र्युगपद्भावासम्भवाद्विरोधः। तुल्यवलत्वं च तयोः स्पर्द्धायाः संभाव्यमानत्वात्। कान्तो यद्यागच्छेत्तदा मरणं नाशक्यं, मरणे तु कान्तागमासम्भव इत्युभयोः स्पृहायां विकल्पः। श्लेषगर्भत्वाच्चातुर्य्यं। यथा वा—

युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनु र्वा हरेः ॥

दीयतामूर्जितं वित्तं देवाय ब्राह्मणाय वेत्यत्र नायमलंकारः। चातुर्य्याभावात् ॥ ८७ ॥

रत्नावली क्रमाद्व्यक्तिः ख्यातसाहित्यशालिनां ॥
उदा०—महापद्मः पद्मार्चितचरण-शंखांचितकरः
श्रवोभूषाभास्वन्-मकरविलसन्कच्छपवपुः ।

मुकुन्दः सत्कुन्द-स्तुतदशननीलोरुचिभरा
द्युलिव्याजात् खर्वी हृदि निवसदेव प्रणयिनाम् ॥

अत्र प्रसिद्धसहभावा नवापि निधयः क्रमाद्व्यञ्जिताः। एवं तथाभूताः सिद्ध्यादयोप्युदाहार्य्याः ॥ ८८ ॥

पूर्वं पूर्वं प्रति स्याच्चेदूर्ध्वमूर्ध्वं विशेषणं।
स्थाप्यं सत्खण्ड्यमानं वा तदा त्वेकावली भवेत् ॥

उत्तरोत्तरस्य पूर्वपूर्व-विशेषणभावेन स्थापनं खण्डनं वा यदि भवति, तदा द्विभेदा एकावली स्यात्।

क्रमेणोदा०—वृन्दावनं दिव्यलतापरीतं लताश्च पुष्प-स्फुरिताग्रभाजः।
पुष्पाण्यपि स्फीत-मधुव्रतानि मधुव्रताश्च श्रुतिहारिगीताः॥

अत्र पूर्वपूर्वविशेषणतयोत्तरोत्तरस्य स्थापनं।

न तज्जलं यन्न सुचारुपंकजं न पंकजं तद्यदलीन-षट्पदं।
न षट्पदोऽसौ न जुगुंज यः कलं न गुंजितं तन्न जहार यन्मनः॥

अत्र पूर्वपूर्व विशेषणभावेन परपरस्य निरासः ॥ ८९ ॥

व्याघात स्त्वन्यथाकारितथाकारिकृतं यदि।

तथाकारिसाधनं यद्यन्यथाकारिकृतं स्यात्तदा व्याघातः। लोके यद्यद् साधनत्वेन प्रसिद्धं तच्चेत्केनचिद्विरुद्धसाधनं क्रियते, तदेत्यर्थः॥ यथा—

दृक्पातनिहतं कामं दृक्पातै र्जीवयन्ति याः।
गोप्योऽपि विभवस्नेहा स्ताः स्तुवे गोपसुभ्रुवः॥

यथा वा— सीते मृदुस्त्वं न मया सहाटवीं चलेति भर्त्रा गदिता तमाह सा।
देवारविन्दात्त चलाम्यहं पुरो मृद्वीं विचित्रां भवता सहाटवीं॥ ९०

गुम्फः कारणमाला स्याद्यथा पूर्वान्त-हेतुभिः॥

उत्तरोत्तरहेतुभूतपूर्वपूर्वैः पूर्वपूर्व हेतुभूतोत्तरोत्तरै र्वा वस्तुभि र्यदि गुम्फः स्यात्तदा कारणमाला॥ क्रमेणोदा०—

सत्सङ्गाद्वै राग्यं वैराग्या च्चित्तशुद्धिराशु भवेत्।
चित्तशुद्ध्या प्रमोदमूर्त्तिः प्रकाशते भगवान्॥

भवन्ति नरकाः पापात्पापं दारिद्र्य-संभवं।
दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत्॥ ६१

आक्षेप स्तु निषेध श्चेद्वक्तुमिष्टस्य वस्तुनः।
विशेषं वक्तुमिति शेषः॥ यथा—

सखि विरहे वनमाली विलोक्य दत्तं त्वया हारं।
हन्त नितान्तमिदानीं निर्दयहृदि किं भणिष्यामः॥

अत्र हरिविरज-दुःखस्य विवक्षितस्य प्रतिषेधः। त्वां विनासौ न भविष्यतीति तस्य विशेषो विवक्षितः॥

यथा वा—नवनीतनिभा राधा बाधा स्मरशराग्निजा।
निर्दयस्त्वमिहोक्तेन किं वा न ब्रूमहे वयं॥

अत्र राधा-विरहवेदनाया विवक्षितायाः प्रतिषेधः। अशक्यकथत्वं तु तस्या विशेषो वक्तुमिष्टः॥ वक्ष्यमाणोक्तविषयतयाक्षेपस्य द्वैविध्य-संभवात्तथैवासौ निरूपितः॥ ६२

ललितं प्रस्तुते वर्ण्यवाक्यार्थ-प्रतिविम्बनम्॥

प्रस्तुते धर्मिणि यो वर्णनीयो वाक्यार्थस्तमवर्णयित्वा तत्रैव तत्सरूपस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनं ललितं। यथा—

अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसङ्कततया कृतार्था अव्यापि नानेन जनेन संज्ञा॥

नलं प्रत्येतद्वाक्यं। अत्र कतमो देश स्त्वया परित्यक्त इति प्रस्तुतार्थमुपन्यस्य वसन्तमुक्तस्य वनस्य दशामनायीति तत्प्रतिबिम्बभूतार्थमात्रोपन्यासाल्ललितमलंकारः॥ ६३॥

रसादीनां रसांगत्वे रसवत् परिकीर्त्त्यते।
यथा—कान्तश्चवोत इत्यादि॥ अत्र हास्यांगं शृङ्गारः॥
यथा वा—मुनि र्जयति योगीन्द्रो महात्मा कुम्भसंभवः।

येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥

अत्र मुनिविषयक-भावांगमद्भुतः ॥ ९४ ॥

भाव श्चेदंगतां याति रसादौ प्रेय उच्यते ॥

यथा—चेतो मदीयमित्यादि। अत्र स्मृतिरूपो भावो विप्रलम्भांगं ॥९५॥

तदूर्जस्वि रसादौ चेदंगताभा स्तयो भवेत् ॥

यथा—त्वत्सैनिकहृतान्दारान्पुनः प्राप्य त्वदाज्ञया।
मुदिते मथुरानाथ वन्द्यसे शात्रवैरपि ॥

अत्र शत्रुस्तुतिरूपो भावाभासो भगवद्विषयस्य भावस्यांगं ॥ ९६ ॥

अंगं रसादौ भावस्य प्रशम श्चेत् समाहितं ॥

यथा—देवेन्द्रजित्सु पृथुकात्पृथुकोपमाङ्गी
रस्मासु सत्सु न तवेति गिरा सुराणां।
कंसस्य यो हृदि मदः स तु तेषु सर्वे
ष्वाप्तेषु तत्पृथुकतां क्व गतो न जाने ॥

अत्र मदप्रशम स्तस्यांगं ॥ ९७ ॥

भावोदयादे रंगत्वे कथिता स्तत्तदाह्वयाः ॥

भावोदय-भावसन्धि-भावशावल्याख्या स्त्रयोऽलकांराः ॥

यदा—मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशां।

अत्र राजविषयक-भावांगं त्रासोदयः। एवमन्यत् ॥९८। ९९। १००

## अथ प्रमाणालंकाराः।

प्रमाणजन्या प्रमितिः प्रमाणालंकृतिः स्मृता ॥

तत्र प्रत्यक्षं। यथा—

कलवाक्यान्मृदुस्पर्शात्सौन्दर्य्यादधरासवात्।
सौरभाच्चापि मे तन्वि हरसीन्द्रिय-पंचकं ॥

अत्रेन्द्रियतृष्णाजन्यं प्रत्यक्षमलंकारः॥ यथा वा—आसन्नपद्माकरे स्त्रीणामित्यादि॥ अत्र भ्रमानन्तरं चाक्षुषं तत्॥१०१

अथानुमानं—जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः
प्रियवक्त्रचन्द्रः।
तत्कान्तिजालैः प्रसृतैस्तदङ्गे ष्वापाण्डुता कुड्मलताक्षिपद्मे॥

अस्या हृदयं प्रियवदनचन्द्रवदिति रूपकविच्छित्त्या संजातानुमितिरलंकारः। वह्निमान् धूमादित्यादौ तु नायं, विच्छित्तिविरहात्॥ १०२॥

अथोपमानं यथा—तां रोहिणीं विजानीहि ज्योतिषामत्र मण्डले।
यस्तन्वि! तारकान्यासः शकटाकार माश्रितः॥

अत्रोपमानमूलमतिदेशवाक्यं। शकटाकारा रोहिणीत्युपमितिः॥ १०३॥

अथ शाब्दः—वेदास्तथा स्मृतिगिरो यमचिन्त्यशक्तिं
सृष्टिस्थितिप्रलयकारणमामनन्ति।
तं श्यामसुन्दरमविक्रियमात्ममूर्त्तिं
सर्वेश्वरं प्रणतिमात्रवशं भजामः॥

अत्र निर्विकारचैतन्यमूर्त्तिरीश्वरो जगद्धेतुरित्यत्र श्रुत्यादि-प्रमाणमुक्तं, तज्जन्या शाब्दी प्रमितिः। एवमाचारविषयाः स्मृतयः, श्रुतिलिङ्गादयश्च षट् बोध्याः॥ १०४॥

अथार्थापत्तिः।—निर्णेतुं शक्यमस्तीति मध्यं तव नितंबिनि।
अन्यथा नोपपद्येत पयोधरभरस्थितिः॥

अत्राकुचस्थित्यन्यथानुपपत्तिप्रभवार्थापत्ति र्मध्यसत्त्वे प्रमाणमिति तन्निश्चयरूपा प्रमितिः॥ १०५॥

अथानुपलब्धिः। यथा—स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते
तदनुपलभमाना स्तर्कयंतोऽपि लोकाः।
कुलगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतो रिन्द्रजालं प्रतीमः॥

अत्र मध्यानुपलब्धि मध्याभावे प्रमाणं, ततो मध्यं नास्तीति प्रमितिः।
॥ १०६ ॥

अथ संभवः। स च सहस्रे शतं संभवतीति बुद्धौ संभावना। यथा—

ये नाम केचिदिह नः प्रथयत्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यतेऽस्ति मम कोपि समानधर्मा
कालो ह्ययं निरवधि विपुला च पृथ्वी॥

अत्र समानधर्म-विशिष्टस्य जनस्योत्पत्तिस्थितौ संभवाख्येन प्रमाणेन सिध्यत स्तदुपपादके च कालानन्त्यपृथ्वी-वैपुल्ये भवतः॥ १०७

अथैतिह्यं—तच्चाज्ञातवक्तृकं पारंपर्य्यप्रसिद्धमेव। यथेह तरौ यक्षो निवसतीति॥ उदा०—

कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे।
राति जीवन्तमानन्दो नरं वर्षशतादपि॥

इह लौकिकी गाथेत्यनिर्दिष्टवक्तृकं प्रवाहपारंपर्य्यमुक्तं॥ १०८

अथ पूर्वोक्तैरनुप्रासाद्यैरतिह्यांतैरलङ्कारैः संसृष्टिसंकरौ नाम स्याताम्॥ यथा मणिस्वर्णादि-संयोगे चारुत्वातिशयो पृथगलङ्कारस्तथानुप्रासोपमादिसंयोगे संसृष्टिः संकरश्च तादृक् पृथगलङ्कारो नृसिंहाकारवपुः। संसृष्टौ तिलतण्डुलन्यायेन संकरे तु क्षीरनीरन्यायेनालङ्कारसंयोगः। तथाहि—

सा स्यात्संसृष्टिरेतेषां पृथगेकत्र या स्थितिः।

पूर्वोक्तानामलङ्काराणामेकस्मिन् काव्ये मिथो निरपेक्षा स्थितिः संसृष्टिः॥ यथा—

कृष्णः पायादपायान्नः पूर्णेन्दु-सदृशाननः।
भक्तहृत्सरसीहंसः कंसवंशनिसूदनः॥

अत्र पायादपायादिति यमकं कंसवशेत्यनुप्रासः । अनयोः संसृष्टिः। पूर्णेति भक्तेति चोपमारूपकयोः, एवं संसृष्टयोश्च सा बोध्या । यथा वा—

वृन्दावनद्रुमतलेषु गवां व्रजेषु वेलावसान-समयेषु च मृग्यते यत् ।
तद्वेणुवादनपरं शिखिपिच्छचूडं ब्रह्म स्मरामि कमलेक्षणमभ्रनीलं ॥

अत्र पूर्वार्द्धे तुल्ययोगिता तूर्य्यपादे तूपमानयोः संसृष्टिः ॥ १०६

स्थितिरङ्गाङ्गिभावेन तद्वदेकाश्रयेण चेत् ।
संदिग्धत्वेन चैतेषां तदा स्यात्संकर स्त्रिधा ।

तत्रांगाङ्गिभावेन स्थिति र्यथा—

वदनमृगांकं सुदृशो वक्षसि नक्षत्रमालिकां वीक्ष्य ।
उदितेऽपि पूष्णि कोकी विशंकयासौ प्रवेपते रात्रेः ॥

अत्र रूपकमंगं भ्रान्तिमानंगी । यथा वा । अनुरागवती सन्ध्येत्यादि । अत्र समासोक्ति र्विशेषोक्ते रंगं । एकाश्रयणेन स्थिति र्यथा—

राजते रघुवर्य्यस्य कीर्त्तिः कुन्देन्दु-सुन्दरी ।

अत्र व्यतिरेकानुप्रासयो रेकपदाश्रयणेन स्थितिः ।

यथा वा—नन्दः किमकरोद् ब्रह्मन्श्रेय एव महोदयम् ।
यशोधा वा महाभागा पपौ यस्याः स्तनं हरिः ॥

यस्य नन्दस्य । स्तनं शब्दं वाक्यं पपौ पालितवानिति प्रथमोऽर्थः । अत्रानुमानश्लेषयोरेकपादाश्रयणेन स्थितिः । संदिग्धत्वेन स्थिति र्यथा—

मुखाब्जं तव पश्यामो दशनद्युतिकेशरं ॥

अत्र रूपकमुपमा वेत्यनिश्चयात्सन्देहः । एकतर-युक्त्यनुपलंभात् । यथा वा । दोर्भ्यां संयमित इत्यादिः (८०) । अत्र विशेषोक्ति-विभावनयोः सन्देहेन संकरः । अनुकूलार्थान्तरन्यासयो स्तयो श्चैकाश्रयणेन स्थित्या च सः । एकतरयुक्तेरुपलम्भे तु न सन्देहं-संकरः । यथा—

तवेदं श्रीकरग्राहि मुकुन्द करपंकजं ।

अत्र करस्यैव श्रीकरग्रहः संभवेदित्युपमायाः साधिका युक्ति र्बाधिका तु रूपकस्य। यथा वा—त्वां विद्वद्भास्करं संज्ञा समालिंगति सर्वदा॥

अत्रालिंगन मुपमाया बाधकं। सत्याः पतितुल्ये तस्यासंभवात्॥ ११०॥

---

अथैषामलंकाराणां केचन दोषाः सन्ति, ते तूक्तेषु दोषेष्वं तर्भवंत्यतः पृथङ् न लक्ष्यन्ते॥ तथाहि वैफल्यमप्रसिद्धी रीत्ययोग्यता चानुप्रासस्य दोषः।

स चापुष्टार्थत्वं प्रसिद्धिविरोधः प्रतिकूलाक्षरत्वं च क्रमात्। क्रमेणोदा०—

सुन्दरो नन्दपुत्रोऽसौ कंस त्वद्वंशनाशनः॥

अत्रानुप्रासो वाच्यापोषकत्वाद्विफलः॥

वृन्दारकाणां सन्दोहः कुन्देन्दु-प्रतिमो बभौ॥

अत्र सर्वेषां देवानां शौक्ल्यमप्रसिद्धं॥

शिखण्डिताण्डवे भामा कामकाण्डै र्विखण्डिता॥

अत्र शृङ्गारे गौडी रीतिरयुक्ता। यमकस्य त्रिपाद्यां स्थितिरप्रयुक्ता॥

यथा— सारसं तत्र पश्यन्ती सारसं नवयौवना।
प्रेयसि श्रीहरौ सुभ्रूः सारसं प्रत्यपद्यत॥

उपमायामसादृश्यासंभवावनुचितार्थता॥ क्रमेणोदा०—

हंसः करीव निर्भाति विधुवत्पाण्डुरं वचः॥

अत्र मरालगजयोः सादृश्यं नास्ति, वचसि शौक्ल्यमसंभवि। उपमानस्य जातिप्रमाणगते न्यूनत्वाधिक्ये च तथा। क्रमेणोदा०—

विप्रोऽयं सर्पवद्दीप्रो दधिविन्दुनिभो विधुः।

अत्र जात्या प्रमाणेन च न्यूनता। दीर्घायु र्द्रौणिवत्काको वेणीयं यमुनोपमा। अत्र जात्या प्रमाणेन चाधिक्यं॥ ००॥

नवप्रभः संप्रति काव्यकौस्तुभः
प्रभाति विद्यैकविभूषणेन यः ।
आलोकत स्तस्य जनैः सुबुद्धिभिः
परीच्यतामिष नु काव्यपूरुषः ॥ १ ॥

विद्याभूषणगदितं गदितंत्र काव्यकौस्तुभं विभ्रत् ।
तिष्ठति यदि कमनोयो नमनोयोऽसौ न किं सदसि ॥ २ ॥

इति काव्यकौस्तुभे शब्दार्थालङ्कारनिर्णयो
नवमी प्रभा ॥ ९ ॥

---

[ संवत् १८१२ कामाह छुदि १ दिने शनिवासरे एषा पुस्तिका लिपीकृता ॥
सवाई जयपुरमध्ये लिपीकृता ॥ ]

# विषय-सूची ।



---

# सूचीपत्रम् ।

( वर्णानुक्रमेण )

# श्रीनवद्वीपहरिबोलकुटीरतः प्रकाशितः

## श्रीश्रीगौडीय-गौरव-ग्रन्थगुच्छः ।

१ । वृन्दावन-महिमामृतम् । २ । आश्चर्यरासप्रबन्धः ।
३ । लीलास्तवः । ४ । कृष्णाभिषेकः ।
५ । गोपालतापनी । ६ । मथुरामाहात्म्यम् ।
७ । सामान्यविरुदावली-लक्षणं ।
८ । गोपालविरुदावली ।
९ । माधवमहोत्सवम् महाकाव्यम् ।
१० । राधाकृष्णार्चनदीपिका ।
११ । योगसार-स्तवटीका । १२ । धातुसंग्रहः ।
१३ । भक्तिरसामृतशेषः [ गायत्रीविवृतिः ]
१४ । कृष्णाह्निक-कौमुदी ।
१५ । दानकेलि-चिन्तामणिः ।
१६ । चमत्कार-चन्द्रिका । १७ । सुरतकथामृतम् ।
१८ । निकुञ्जकेलिविरुदावली ।
१९ । सिद्धान्तदर्पणः । २० । ऐश्वर्यकादम्बिनी ।
२१ । काव्यकौस्तुभः । २२ । छन्दःकौस्तुभः ।
२३ । कृष्णविरुदावली । २४ । गौराङ्गविरुदावली ।
२५ । परतत्त्वगौरः । २६ । श्यामानन्दशतकम् ।
२७ । मुक्ताचरित ( वङ्गभाषानिबद्धः ) ।
२८ । दुर्लभसार ( वङ्गभाषानिबद्धः ) ।